# सिंघी जैन ग्रन्थमाला

[ ग्रन्थांक ५० ]

भदन्त गुणप्रभ विरचित

[ मूलसर्वास्तिवादीय ]

# विनयसूत्र




## SINGHI JAIN SERIES

[NUMBER 50]

# VINAYASŪTRA

OF

MŪLA SARVĀSTIVĀDIN School of Buddhism

by

BHADANTA GUṆAPRABHA

कलकत्तानिवासी

साधुचरित-श्रेष्ठिवर्य श्रीमद् डालचन्दजी सिंघी पुण्यस्मृतिनिमित्त

प्रतिष्ठापित एवं प्रकाशित

# सिंघी जैन ग्रन्थमाला

[ जैन आगमिक, दार्शनिक, साहित्यिक, ऐतिहासिक, वैज्ञानिक, कथात्मक–इत्यादि विविधविषयगुम्फित प्राकृत, संस्कृत, अपभ्रंश, प्राचीनगूर्जर,-राजस्थानी आदि नाना भाषानिबद्ध सार्वजनीन पुरातन वाङ्मय तथा नूतन संशोधनात्मक साहित्य प्रकाशिनी सर्वश्रेष्ठ जैन ग्रन्थावलि ]

प्रतिष्ठाता

श्रीमद्-डालचन्दजी-सिंघीसत्पुत्र

स्व० दानशील-साहित्यरसिक-संस्कृतिप्रिय

**श्रीमद् बहादुर सिंहजी सिंघी**






प्रधान सम्पादक तथा संचालक

**आचार्य जिनविजय मुनि**

अधिष्ठाता, सिंघी जैन शास्त्र शिक्षापीठ

निवृत्त ऑनररि डायरेक्टर

भारतीय विद्या भवन, बंम्बई

*

ऑनररी फाउंडर-डायरेक्टर

राजस्थान ओरिएण्टल रिसर्च इन्स्टीट्यूट, जोधपुर ( राजस्थान )

ऑनररी मेंबर – जर्मन ओरिएण्टल सोसाईटी, जर्मनी, भाण्डारकर ओरिएण्टल रिसर्च इन्स्टीट्यूट, पूना ( दक्षिण ), गुजरात साहित्यसभा, अहमदाबाद ( गुजरात ), विश्वेश्वरानन्द वैदिक शोध प्रतिष्ठान, होसियारपुर ( पञ्जाब ) इत्यादि ।

*

संरक्षक

**श्री राजेन्द्र सिंह सिंघी तथा श्री नरेन्द्र सिंह सिंघी**

व्यवस्थापक

**अधिष्ठाता, सिंघी जैन शास्त्र शिक्षापीठ**

**भारतीय विद्या भवन, बम्बई**

---


प्रकाशक–ज. ह. दवे, ऑनररी डायरेक्टर, भारतीय विद्या भवन, बम्बई, नं. ७

मुद्रक – लक्ष्मीबाई नारायण चौधरी, निर्णयसागर प्रेस, २६-२८ कोलभाट स्ट्रीट, बंबई २.

भदन्त गुणप्रभ विरचित

[ मूल सर्वास्तिवादीय ]

# विनयसूत्र



संपादनकर्ता

त्रिपिटकाचार्य, महापण्डित

श्री राहुल सांकृत्यायन



प्रकाशनकर्ता

अधिष्ठाता, सिंघी जैन शास्त्र शिक्षापीठ

भारतीय विद्याभवन, बम्बई



विक्रमाब्द २०१७ ] प्रथमावृत्ति [ खिस्ताब्द १९६१

ग्रन्थांक ५० ]  [ मूल्य रु० ८/८०

# SINGHI JAIN SERIES

## अद्यावधि मुद्रितग्रन्थ नामावलि

१ मेरुतुङ्गाचार्यरचित प्रबन्धचिन्तामणि
मूल संस्कृत ग्रन्थ
२ पुरातनप्रबन्धसंग्रह बहुविध ऐतिह्यतथ्यपरिपूर्ण
अनेक प्राचीन निबन्ध संचय
३ राजशेखरसूरिरचित प्रबन्धकोश
४ जिनप्रभसूरिकृत विविधतीर्थकल्प
५ मेघविजयोपाध्यायकृत देवानन्दमहाकाव्य
६ यशोविजयोपाध्यायकृत जैनतर्कभाषा
७ हेमचन्द्राचार्यकृत प्रमाणमीमांसा
८ भट्टाकलङ्कदेवकृत अकलङ्कग्रन्थत्रयी
९ प्रबन्धचिन्तामणि – हिन्दी भाषांतर
१० प्रभाचन्द्रसूरिरचित प्रभावकचरित
११ सिद्धिचन्द्रोपाध्यायरचित भानुचन्द्रगणिचरित
१२ यशोविजयोपाध्यायविरचित ज्ञानबिन्दुप्रकरण
१३ हरिषेणाचार्यकृत बृहत्कथाकोश
१४ जैनपुस्तकप्रशस्तिसंग्रह, प्रथम भाग
१५ हरिभद्रसूरिविरचित धूर्ताख्यान ( प्राकृत )
१६ दुर्गदेवकृत रिष्टसमुच्चय ( प्राकृत )
१७ मेघविजयोपाध्यायकृत दिग्विजयमहाकाव्य
१८ कवि अब्दुल रहमानकृत सन्देशरासक (अपभ्रंश)
१९ भर्तृहरिकृत शतकत्रयादि सुभाषितसंग्रह
२० शान्त्याचार्यकृत न्यायावतारवार्तिक-वृत्ति
२१ कवि धाहिल्लरचित पउमसिरीचरिउ ( अप० )
२२ महेश्वरसूरिकृत नाणपंचमीकहा ( प्रा० )
२३ श्रीभद्रबाहुआचार्यकृत भद्रबाहुसंहिता
२४ जिनेश्वरसूरिकृत कथाकोषप्रकरण ( प्रा० )
२५ उदयप्रभसूरिकृत धर्माभ्युदयमहाकाव्य
२६ जयसिंहसूरिकृत धर्मोपदेशमाला ( प्रा० )
२७ कोऊहलविरचित लीलावई कहा ( प्रा० )
२८ जिनदत्ताख्यानद्वय ( प्रा० )
२९ ३० ३१ स्वयंभूविरचित पउमचरिउ
भाग १ २ ३ ( अप० )
३२ सिद्धिचन्द्रकृत काव्यप्रकाशखण्डन
३३ दामोदरपण्डित कृत उक्तिव्यक्तिप्रकरण
३४ भिन्नभिन्न विद्वत्कृत कुमारपालचरित्रसंग्रह
३५ जिनपालोपाध्यायरचित खरतरगच्छ बृहद्गुर्वावलि
३६ उद्द्योतनसूरिकृत कुवलयमाला कहा ( प्रा० )
३७ गुणपालमुनिरचित जंबुचरिय ( प्रा० )
३८ पूर्वाचार्यविरचित जयपाहड-निमित्तशास्त्र (प्रा०)
३९ भोजनृपतिरचित शृङ्गारमञ्जरी ( संस्कृत कथा )
४० धनसारगणीकृत–भर्तृहरिशतकत्रयटीका
४१ कौटल्यकृत अर्थशास्त्र सटीक ( कतिपयअंश )
४२ विज्ञप्तिलेखसंग्रह विज्ञप्तिमहालेख - विज्ञप्तित्रिवेणी
आदि अनेक विज्ञप्तिलेख समुच्चय
४३ महेन्द्रसूरिकृत नर्मदासुन्दरीकथा ( प्रा० )
४४ हेमचन्द्राचार्यकृत छन्दोऽनुशासन
४५ वस्तुपालगुणवर्णनात्मक काव्यद्वय
कीर्तिकौमुदी तथा सुकृतसंकीर्तन
४६ सुकृतकीर्तिकल्लोलिनीआदि वस्तुपालप्रशस्तिसंग्रह
४७ विविधगच्छीय पट्टावलिसंग्रह
४८ नयसोमविरचित मन्त्रीकर्मचन्द्रवंशप्रबन्ध
४९ गुणप्रभाचार्यकृत विनयसूत्र ( बौद्धशास्त्र )

## Shri Bahadur Singh Singhi Memoirs

**Dr. G H. Buhler's Life of Hemachandrāchārya**
Translated from German by Dr Manilal Patel, Ph D

1 स्व बाबू श्रीबहादुरसिंहजी सिंघी स्मृतिग्रन्थ [ भारतीयविद्या भाग ३ ] सन १९४५
2 Late Babu Shri Bahadur Singhji Singhi Memorial Volume
BHARATIYA VIDYA [Volume V] A D 1945
3 Literary Circle of Mahamatya Vastupala and its Contribution to Sanskrit Literature By Dr Bhogilal J Sandesara, M A, Ph D (S J S 33)
4-5 Studies in Indian Literary History Two Volumes
By Prof P K Gode, M A (S J S No 37-38)

## संप्रति मुद्यमाणग्रन्थनामावलि

१ जैनपुस्तकप्रशस्तिसंग्रह, भाग २
२ रामचन्द्रकविरचित-मल्लिकामकरन्दादिनाटकसंग्रह
३ जयपाहड तथा चूडामणि शास्त्र
४ तरुणप्रभाचार्यकृत षडावश्यकबालावबोधवृत्ति,
५ प्रद्युम्नसूरिकृत मूलशुद्धिप्रकरण-सटीक
६ कुवलयमाला कथा, भाग २
७ सिंहतिलकसूरिरचित मन्त्रराजरहस्य

## भदन्तगुणप्रभविरचितं

### [ मूलसर्वास्तिवादीयं ]

# विनयसूत्रम् ।

## १. प्रव्रज्यावस्तु ।

### §१, श्रामणेरत्वोपनयम् ।

॥ नमो बुद्धाय ॥

अथ निर्याणवृत्तम् [१] । सर्वस्मिन् सन्निपतिते संघे कृतेदं वेशं निपत्य प्रगृहीताञ्जलिमुत्कुटुकस्थं वृद्धान्तं याचितवन्तं त्रिज्ञप्तिचतुर्थेन कर्मणा सह प्रव्रज्योपसंपदावुपनयेयुरिति पुराकल्पः [२] । निःश्रितस्य कश्चिद् भिक्षुं तत्रोपाध्यायतया प्रव्रज्योपसम्पदौ [३] । वृद्धान्तरायिकं परिशुद्धाय पूर्वोपाध्यायत्वेनावकाशं कुर्यात् [४] । नानुपसम्पन्नस्य पूर्वमुपासकत्व-श्रामणेरत्व-भिक्षुत्वानामुत्तरम् [५] । शरणगत्यभ्युपगमवचनोपक्रममुपासकत्व-श्रामणेरत्वाभ्युपगमवचनं कुर्वीत [६] । अनन्तरमतशिक्षतित्त(शैक्षता ?)मनभ्युपगमरूपेण [७] । स्वयमुपासकतामुपनीयारोचकाय संघस्यार्पयेत् भिक्षवे [८] । कश्चि( ? चि ) त् परिशुद्धया( ? द्ध इ )तीति पृष्ट्वा श्रद्धमानयेत् [९] । सर्वसान्निपातेन वा संनिपण्णेनुलयनं वा [१०] । स चेत् परिशुद्ध [इ]तीति सर्वे ब्रूयुः [११] । उपाध्यायं याचेत [१२] । केशश्मश्रवतारयेताचूडम् [१३] । अवतार्यतां चूडेति पृष्टेनानुज्ञाते( त ए)तान् [१४] । स्नायात् [१५] । उपाध्यायः काषायाणि वस्त्राणि दद्यात् [१६] । पादयोर्निपत्य प्रतिगृह्णीत [१७] । उपाध्यायः प्रावृणुयात् [१८] । व्यञ्जनं प्रत्यवेक्षेतासंचेतितम् [१९] । प्रव्रज्यामुपनयेत् शरणगमनोपक्रमम् [२०] । याञ्चानन्तरं वा [२१] । श्रामणेरत्वोपनायिनेऽर्पयेत् भिक्षवे [२२] । कच्चित् परिशुद्ध[इ]तीति पृष्ट्वा श्रद्धमुपनयेत् [२३] । आचार्यः [२४] । रहोनुशंसककर्मकारकनिःश्रयदायकपाठकाश्च [२५] । वृत्तेऽर्थे भूतत्वम् [२६] । अभ्युपगतावुपाध्यायस्य याञ्चायां तदुद्भूतिः [२७] । आवृत्तौ तृतीये शे(थें ?)न्त्यायां वृत्तत्वम् [२८] । तद्यथा परोत्कीर्त्तनकाले श्रामणेरत्वस्य [२९] । पश्चिमोत्रोपाध्यायत्वस्य [३०] । पर्यन्ते निःश्रयदानस्यैकरात्रं निःश्रयत्वेन प्रत्यु-

पस्थानम् [३१] । पाठस्य त्रिरेकगाथापरिवर्चनम् [३२] । नापाठनाभिप्रायेणोच्चारणे पाठत्वम् [३३] । नान्यथैनं उपस[म्पा]दयेत् [३४] । नैत्रमन्यम् [३५] । नानुक्त्वा सहितमर्थंहेतोर्नाम गृह्णामीत्युपाध्यायनाम गृह्णीयात् [३६] ।

॥ [इति] श्रामणेरत्वोपनयविधि· ॥

ॐ

## § २, उपसम्पद्विधिः ।

संघादुपसंपत् [३७] । उपाध्यायतायामुन्मुखीभूतः कर्मकारकमधीच्छेद् रहोनुशासकञ्च भिक्षुम् [३८] । उपाध्यायं याचेत [३९] । स स्वयमेनं त्रिचीवरमधिष्ठापयेत् [४०] । पात्रञ्चोपदर्श्य मोनमधिकं पा(भा ?)ण्डपेतिति (?) संघे [४१] । सुपात्रमित्यनेवं ब्रूयुः सर्वे [४२] । अपक्रमिते क इत्यारयाप्य रहोनुशासकमुत्साह्य कर्मकारकः संवर्त(?)पेनमनुज्ञापयेत् [४३] । शृणु त्वमहो रहसमनुशिष्यात् [४४] । तिष्ठ मा शब्दिता गमिष्यसीत्येनमुक्त्वा समनुशिष्ट इति संघाय परिशुद्धिं निवेद्य किमागच्छत्वित्यागमनं पृच्छेत् [४५] । स चेत् परिशुध्य( द्ध इ )तीति सर्वे ब्रूयुः [४६] । उपसंपदं कर्मकारको याचयेत् [४७] । ज्ञापयित्वा संघान्तरायिकं पृच्छेत् [४८] । उपसंपदमुपनयेत् [४९] । छाय( ? यां ) वेदयेतानन्तरं मितात्म् [५०] । सं(? शं )कुना चतुरङ्गुलेनैतत् साधु [५१] । पुरुषत्वेनास्य चानुव्यवहारः [५२] । अहोरात्राद्यपूर्वाह्णादिकम् [५३] । समयञ्च पञ्चैते [५४] । हैमन्तिको ग्रैष्मिको वार्षिको मितवार्षिको दैर्घवार्षिक इति [५५] । चातुर्मासिकौ पूर्वौ [५६] । मासः परः [५७] । ततोऽहोरात्रतः [५८] । तदूनमन्यो मासत्रयम् [५९] । निःश्रयानारोचयेत् [६०] । पतनीयान् धर्मान् [६१] । श्रमणकारकाश्च [६२] । समप(म्प ?)न्नतां सम्यक्तया च प्रेप्सितस्योद्ग्राह्य शीलसामान्यगततारागणे नियुञ्जीत् (? त) [६३] । यानिकमन्धन्धप्रतिबिम्बने [६४] । विनीतसंवासतायाम् [६५] । प्रयोजनानुष्ठाने [६६] । संपद्यमानतामनाख्यातसमाचपरिज्ञानस्याचक्षीत [६७] । आदरे नियुञ्जीत [६८] । सोपाख्यानञ्च संपादने [६९] ।

॥ [इति] उपसम्पद्विधि ॥

ॐ

### (क) नि श्रयगतम् ।

नानवलोक्य निःश्रयं निःश्रितः करणीयं कुर्यात् [७०] । मुक्त्वोच्चारप्रस्रावम् [७१] । दन्तकाष्ठविसर्जनं सोपविचारे विहारे चैत्याभिवन्दनम् [७२] । एकान्तं पञ्चाशद्व्यामपर्यन्ता विरमतो गमनं पात्रचीवरकर्मणो ग्लानोपस्थाने को(? कौ)कृत्यप्रतिविनोदने पापकदृष्टिगतप्रतिनिःसर्गे तीव्रमौत्सुक्यमापद्येता-

होचतारं कुर्यां कारयेयं चेति (७३)। प्रणिघातुकामे संघेऽहो चत संघोऽस्येदं प्रणिधिकर्म न कुर्यादिति (७४) । कृतेऽवसारयेदिति (७५) । परिवासमूलपरिवासमानाप्यमूलमानाप्यावर्त्तनार्थिनि निःश्रयेऽहो वत संघस्य परिवासादचतुष्कं दद्यादावहेदिति (७६) । सोऽस्यैतदस्मै कुर्यादुत्सृज्यावलोकनम् (७७) । नोनदशवर्ष उपसंपदोपाध्यायत्वनिःश्रयत्वानिःश्रितवासान् कुर्यात् (७८) । नासमन्विते केनचिदनन्तरेभ्यः समायोगेन (७९) । .ग्लानोपस्थानकौकृत्यप्रतिविनोदनपापकदृष्टिगतप्रतिनिःसर्गानभिरतिस्थानप्रमीलनानां करणकारणे सीमार्थम् (८०) । पा[प]कै(?)क्षत्वादपञ्चके सशीलवत्ता वाह(हु?)श्रुत्यम् (८१) । पिटकाभिज्ञत्वम् (८२) । ग्रहण एषां प्रतिबलत्वम् (८३) । अधिशीलचित्तप्रज्ञं शिक्षणायाम् (८४) । प्रतिबलत्वं वा शिक्षणायाम् (८५) । एवमभ्याचारविनयप्रातिमोक्षम् (८६) । श्रद्धाशीलश्रुतत्यागप्रज्ञासम्पन्नत्वम् (८७) । शीलसमाधिप्रज्ञाविमुक्तितज्ज्ञानदर्शने (८८) । आरब्धवीर्यत्वप्राज्ञत्वं च (८९) । स्मृतिमत्त्वम् (९०) । प्रतिसंलील(?)नत्वम् (९१) । समाहितत्वम् (९२) । शैक्षता (९३) । अशैक्षता (९४) । उत्पत्तिप्रज्ञप्त्यनुप्रज्ञप्तिप्रतिक्षेपाभ्यनुज्ञाभिज्ञत्वम् (९५) । आन्तरायिकानान्तरायिकाभिज्ञत्वं ख्यापितानुशासकत्वम् (९६) । सहग्राहणप्रतिबलत्वेन निःश्रयस्योपनिःश्रयस्य वा (९७) । आपत्त्ये(च्य?)नापत्तिगुरुलघुताभिज्ञत्वप्रवृत्तप्रातिमोक्षविस्तरत्वम् (९८) । वृद्धाभावे नवकं निःश्रयेत (९९) । सामीचिं केवलं ज्ञापयेत् (१००) । चरेदनिःश्रितः पञ्चवर्षः पश्चिमसम[ा] योगेन समन्वितजनपदचारिकम् (१०१) । नान्यस्यैविधोऽपि (१०२) ।

॥ [इति] निःश्रयगतम् ॥

(ख) सग्राहगतम् ।

नास्ति(सि?) तीर्थ्य इति प्रव्रज्यार्थमुपसंक्रान्तं पृच्छेदुपसम्पादकांश्च (१०३) । नानाराधितचित्तमुत्सृज्य शाक्यमाग्नेयञ्च जटिलं तीर्थ्यं प्रव्राजयेयुरुपसंपादयेयुर्वा कृते तत्तीर्थ्यानाराधितादितीर्थ्यान्तरवर्ज[न?]म् (१०४) । रत्नानां वर्णस्य तीर्थ्यानामवर्णस्य भूतस्योक्तावकुप्यत्वमाराधितचित्तता (१०५) । तदर्थमतद्भन्तमेनं कृतोपासकतान्तं चतुरो मासान् परिवासयेत् संघो दत्त्वा परिवासं कर्मणा (१०६) । संघात् तस्य भक्तम् (१०७) । उपाध्यायाच्चीवरम् (१०८) । कर्त्तृत्वञ्च कर्मादानस्य (१०९) । परिपूर्णपञ्चदशवर्षोऽसीति प्रव्रज्यार्थमुपसंक्रान्तं पृच्छेत् (११०) । नोनमसमर्थं काकोड्डायने समर्थं वा सप्तवर्षं प्रव्राजयेयुः (१११) । नैकत ऊर्ध्वं श्रमणोद्देशमुपस्थापयेत् (११२) । अरुचिश्चेदनेकथ्यं प्रव्रज्यायां प्रव्रज्यातिरिक्तमुपसम्पादयेत् (११३) । ऊनश्चेदन्यस्याप्युपनिःश्रित्यर्थमर्पयेत् (११४) । नासौ तमाछि(च्छि)द्यात् (११५) । उपसंपादयेदप्रयच्छतो बलादादाय कृ[त]दासः (?) (११६) ।

न्यसित्ते(स्ति ते ?) कस्यचित् किंचिद्देयमल्पं वा प्रभूतं वा (११७) । जीवत्पितृकमननुज्ञातम् (११८) । तान्या (?) मदूरदेशं प्रव्रज्यापेक्ष[म् ?] सप्ताहं धारयेत् (११९) । नानारोचितं दूरदेशमप्येनं संघे प्रव्राजयेत् (१२०) । युक्तं प्रव्रज्यापेक्षस्य संघेन भक्तदानम् (१२१) । कृतानुज्ञातोऽपि मातापितृभ्यामन्ते मुक्त्या दूरदेशकम् (१२२) । मासि ग्लान इत्युपसंक्रान्तं पृच्छेत् (१२३) । मा ते ग्लान्यं किञ्चिदस्तीति वा (१२४) । विशेषत उपसंपादकाः (१२५) । न ग्लानं प्रव्राजयेयुरुपसम्पादयेयुर्वा (१२६) । कृतप्राक्प्रणिहितात् (१२७) । नास्त्यस्य ग्रहा(रो ?)हणधर्मतेति च (१२८) । नाशनमेवं र्त्त (त ?)स्य लिङ्गिनः (१२९) । निर्मितः (१३०) । पण्डकः (१३१) । पाश्चविन्यमस्य जात्या पक्षासक्तप्रादुर्भावि(वे ?)र्पयापत्कृत इति (१३२) । अन्त्यस्यात्र दोषभक्तौ नाशनम् (१३३) । तीर्थिकायप्रा(पक्रा)न्तकः (१३४) । समावेदं प्रव्रज्यस्य तद्बुद्धेर्निक्षिप्येदं चीवरं तेन ध्वजेन तत्रारुणोद्गमने वत्नम् (१३५) । अकृते दोर्ना (षो ?)न्यथा स्तेयस्य (१३६) । मातृघातकः (१३७) । पितृघातकः (१३८) । अर्हद्घातकः (१३९) । संघभेदकः (१४०) । तथागतस्यान्तिके दुष्टचित्त (त्तेन ?) रुधिरोत्पादकः (१४१) । भिक्षुणीदूषकः (१४२) । चतुर्णां पाराजिकानामन्यतमामापत्तिमापन्नः (१४३) । तेभ्युपपनोः (?भ्य उपपन्नः) स्याचेत् सामग्री पुनः प्रणिधानम् (१४४) । अदर्शनोक्तौ मृषा चेत् प्रायश्चित्तिकम् (१४५) ।

हस्तच्छिन्ना श्च (?) पादच्छिन्ना अङ्गुलीफणहस्तकाः ।
अनोष्ठकाश्च चित्राङ्गा अतिवृद्धा अतिबालकाः ॥
खञ्जः काण्डरिकः काणः कुणिः कुब्जोऽथ वामनः ।
गलगण्डमूकबधिराः पीठसर्पि श्लीपदी (? श्लिपादकः) ॥
स्त्रीछिन्ना भारच्छिन्ना मार्गच्छिन्नाश्च ये नराः ।
तालमुक्ता कन्दलिछि(च्छि)न्ना एवं रूपा हि पुरुषाः ॥
—प्रतिक्षिप्ता महर्षिणा ॥

प्रासादिकश्च (? स्य) प्रव्रज्या परिशुद्धस्योपसंपदा ।
आख्याता सत्यनाम्ना वै संबुद्धेन प्रजानता ॥

॥ [इति] संभारागतम् ॥

ॐ

§ ३, क्षुद्रकादिगतम् ।

क्रूद्राजभटः (१४६) । अननुज्ञातं राज्ञा दूरदेशकम् (१४७) । कुच्छ्रोघ(? ध्व)जवधकः (१४८) । न रथकारचण्डालपुक्कसतद्विधान् प्रव्राजयेत् (१४९) । निदर्शनं हस्तच्छिन्नादयः (१५०) ।

हरिद्रकेशा हरिकेशा हरितकेशास्तथैव च ।
अवदातकेशाश्च ये नरा नागकेशा अकेशकाः ॥
घा (?घं)टाशिरा बहुशिरा अतिस्थूल[ः] शिपाटकाः ।
खरशूकरशीर्षाश्च द्विशीर्षा अप्यशीर्षकाः ॥
हस्तिकर्णा अश्वकर्णा गोणमर्कटकर्णकाः । खरसूकरकर्णाश्च एककर्णा अकर्णकाः ॥
लोहिताक्षा तिवदाक्षाश्चुल्लाक्षातिपिङ्गलाः । काचाक्षा बुद्बुदाक्षाश्च एकाक्षा[अ]प्यनक्षकाः ॥
हस्तिनासा [अ]श्वनासा गोणमर्कटनासकाः । खरसूकरनासाश्च एकनासा अनासकाः ॥
हस्तिजोडा अश्वजोड[ा] गोणमर्कटजोडकाः । खरसूकरजोडाश्च एकजोडा अजोडकाः ॥
हस्तिदन्ता अश्वदन्ता गोणमर्कटदन्तकाः । खरशूकरदन्ताश्च एकदन्ता अदन्तकाः ॥
अतिग्रीवा अग्रीवाश्च स्कन्धाक्षा अपि कुब्जकाः ।
लांगूलच्छिन्ना वाताडा एकाण्डा [अ]प्यनण्डकाः ॥
अतिदीर्घातिह्रस्वाश्च कृशाश्चातिकभासिनः ।
चतुर्भिश्च छविर्वर्णै चे(?)ला विकटकास्तथा ॥
एवंविधानामपि तं प्रतिक्षेपं प्रधारयेत् ।

न जातिकायदुष्टं प्रव्रजितमुपस्था[प]येत् (१५१) । युज्यते नैकस्यैकोपाध्यायस्यैकेन वचसोपाद[ा]नमा त्रयात् (१५२) । अभीक्ष्णतुल्यसमयानां परस्परं सामीचिकरणस्य (१५३) । संप्राप्ते प्राथम्यम् (१५४) । न द्व्यङ्गुलादूर्ध्वमारण्यकः केशान् धारयेत् (१५५) । नैतदर्वाक्त्वाद् ग्रामान्तिकः (१५६) । न गोलोमकान् केशांछे(श्छे)दयेत् (१५७) । मुक्त्वा व्रणसामन्तकम् (१५८) । न चूडां कारयेत् (१५९) । न संबाधे प्रदेशे रोमकर्म कारयेत् (१६०) । व्रणनिमित्तरूढावन्यथा विज्ञान् स्थविरस्थविरानवलोक्य (१६१) । नाङ्गनाडीमनेतन्निमित्तम् (१६२) । नान्यत्र का[र]येत् क्षुरभारं वा नाग्रच्छेदं भजेत वासिमुखं वा (१६३) । नैषां मृ(मु ?)ष्टिं भजेत (१६४) । भजेत लेखं मलापकृष्टेन चीवरेण केशश्मश्रवतारयेत् (१६५) । धारयेत् केशप्रतिग्रहणम् (१६६) । अभावे संकक्षिकया (१६७) । न संस्तरे (१६८) । न यत्र सांघिकसंम[ा]र्जनीनिपातः (१६९) । अवतारयेत् प्र[ा]सादादौ जीर्णो ग्लानो वातातपवर्षेषु च (१७०) । तं प्रदेशं परिकर्मयेत् (१७१) । संकीर्णे वालोच्छोरणम् (१७२) । एवं नखच्छेदनम् (१७३) । नानधिष्ठिता भिक्षुण्यैषा पुरुषेणातीतरागा केशांछे(श्छे)दयेत् (१७४) । संरत्यमानामधिष्ठात्री समनुशिष्यात् स्मृतिमुपस्थापय किमस्मिन् पूतिकलेवरे सारमस्तीति (१७५) । मातृसंज्ञां भगिन्या दुहितुर्वेति कल्पकम् (१७६) । स्नानं कृते च कुर्वीत (१७७) । पश्चाह्निकं वा शौचं न नग्नः स्नायात् (१७८) । न भिक्षुणी पुरुषतीर्थे न स्त्रीतीर्थे चूर्णेन (१७९) । कल्पते मुद्रादेग-

(गं)न्धपरिभावितं चूर्णम् (१८०) । प्रतिग्रहणमस्य (१८१) । भैषज्यपरिभावितस्य च ग्लानेन (१८२) । न भिक्षुणी योषिति चूर्णं क्षिपेत् (१८३) । नाग्रथि(स्थि?) ताधस्त्यपूर्वपश्चिमनिवासितंन्नै(?)निःश्रयणीमधिरोहेत् (१८४) । नान्यदेवं स्यात् (१८५) । नाप्रतिच्छन्नवक्त्रया व्यतिभजेत (१८६) । धारयेत स्नानशाटकम् (१८७) । आमक्थिर्द्विपुटे प्राणकानाम् (१८८) । पत्राण्यभावे दत्त्वो(?) पुरतः पृष्ठतश्च प्रतिगुप्ते प्रदेशस्नानम् (१८९) । मोचने सक्तस्य प्राणिनोऽपि गतिः (१९०) । उदकभ्रमिविहार एतत् (१९१) । छोरणं च द्रवस्य (१९२) । करणं स्नानशाटिकायाः (१९३) । इष्टकास्तरस्यास्यां दानम् (१९४) । स्यन्दनिकायाः शोधनम् (१९५) । भ्रमे स्नातावनुत्थानम् (१९६) । नेह नोद्वर्षेण कायं शोधयेत् पादाभ्यामन्यम् (१९७) । निदर्शनमेतत् तीक्ष्णशौटीरयोः (१९८) । अभिना शुक्तेः शोधनम् (१९९) । न किंचित् केनचिदाक्षुष्टि चेलवर्त्यो (?) भिक्षुण्युद्वर्षेत् (२००) । नातपगतसंभावकोदकश्चीवराणि प्रवृण्वीत (२०१) । धारयेत् कायप्रोञ्छनम् (२०२) । अभावे मुहूर्त्तमुत्कुटुकेन स्थित्वा स्नानशाटकेन प्रोञ्छनम् (२०३) । प्रतिसेवेत जेन्ताकम् (?) (२०४) । करण्डस्य करणमुच्छ्रकैरे साधु (२०५) । बहिःसंवृत्तस्यान्तर्विशालस्य समुद्राकृतेर्वातायनस्य मोक्षो मध्ये (२०६) । जालवातायनकवाटिकाचक्रिकाघटिकासूचीनाञ्च विनिवेशनम् (२०७) । अजपादकदण्डोपस्थापनञ्च (२०८) । द्वारे कवाटार्गडकटकायामपट्टसमायोजनम् (२०९) । तप्तजलस्थापनार्थमभ्यन्तरपार्श्वकपोतमालाकरणम् (२१०) । अग्निकरणस्थाने भूसाविष्टकास्तरदानम् (२११) । अनिर्वाणाय संवर्त्तनम् (२१२) । तदर्थमायसस्फिजधारणम् (२१३) । ज्वलत्यभावक्रमाय प्रवेशपरिहरणम् (२१४) । तमिकानुत्पत्तये सक्तूनां कटुकतैलप्रक्षिता[नाम]ग्नौ प्रक्षेपः (२१५) । दौर्गन्ध्यविनिवृत्तये धूपदानम् (२१६) । चिक्कसपिण्डिकया क्षिप्रधरणे प्रविधानम् (२१७) । आमलकपिण्डिकपाचकक्षपिण्डकोप्रासनम् (२१८) । तृणो भूमेरास्तरणमात्रैरुत्पत्तिनार्द्रत्वेन तेमनेन वा (२१९) । कण्डूयनार्थमायसदर्विकाकरणम् (२२०) । छिद्रेणोपनिनर्त्य स्त्रकेनास्यास्यापनमुपधिधारिकेण शुक्षेन (२२१) । निर्मादिततासंपत्त्यर्थमस्यामभिकल्पकरणम् (२२२) । अस्नानं तत्र (२२३) । शालायांस्तदर्थं करणम् (२२४) । अनाशाय स्नपयचीवराणामिष्टकावबद्धे (बद्ध?)गर्तकरणम् (२२५) । उदकभ्रमस्यास्य मोक्षः (२२६) । शिष्टानामस्युष्णितायां जलस्यारोचनम् (२२७) । शीतेनास्य भेदः (२२८) । सेकादयोऽपि (२२९) । पापी (?)गोमयदन्तकाष्ठपरिपूर्णकर्परोपस्थापनम् (२३०) । क्षमता चेत् पुरोभक्तिकाकरणम् (२३१) । मध्यपातेन प्रत्युपतिष्ठमानमज्ञातमत्रैव(च?) गत्वो निर्ज्ञानार्थं पृच्छेत् (२३२) । द्वारपालस्यैतदर्थं स्थापनम् (२३३) । अप्रवेशार्थं च भिक्षोः (२३४) । नाश्रद्धस्यात्र प्रवेशं दद्यात् (२३५) । सार्द्धं विहार्यन्तेवासिकैरत्र परिकर्मकरणम् (२३६) । नवकैरित्यपरम् (२३७) । दीपनकटाहकतैलदन्तकाष्ठगोमयस्य मृच्चूर्णपानीयाद्युप-

स्थापनकाष्ठप्रत्यवेक्षणोद्वर्त्तनस्नेहनस्नापनसंमार्जनसंकरच्छोरणादेव [२३८] । तेषां परस्परेण [२३९] । पीठशुक्तयोश्चौक्षतां कृत्व[ा] निक्षेपो यथास्थाने [२४०] । सर्वत्रैषं भाण्डे विधिः सर्वमुपकरं सुगुप्तकेला(ना?)पि तं कुर्यात् [२४१] । अल्पशब्दोऽत्र प्रविशेत् [२४२] । प्रासादिकः [२४३] । सुसंवृतेर्यः [२४४] । संप्रजानन् [२४५] । नाग्रत[ः] स्थित्वा वितपेत् [२४६] । संगणिकावर्जनम् [२४७] । आर्यतूष्णीम्भावालम्बनम् [२४८] । त्रिदण्डकदानमन्ते [२४९] । नैकचीवरः परिकर्म कुर्यात् [२५०] । नैतत् कायस्याश्रद्धेन कारयेत् [२५१] । अतित्वरात्र पूर्वत्र च श्रद्धाभिसंहितम् [२५२] । न सिंहसमश्रृगालसमप्रुत्तिष्ठेत् [२५३] । परमो दुःशीलास्या(?)पोपाध्यायानुपतिष्ठेत् [२५४] । मातृपितृग्लानांश्चागारिकमपि [२५५] । स्नानं संभारकस्नात्रेण [२५६] । वातदह-(हर?) मूत्रगण्डपत्रपुष्पफलक्वाथस्नानं तदाख्यम् [२५७] । अभ्यङ्गस्य(?ङ्गं) रुक्षार्थम् [२५८] । उपस्नानकेनापगस्यैतस्य [२५९] । पूर्वार्धमन्त्ये उदकुम्भे द्विस्नेहबिन्दुदानम् [२६०] । स्नायादपोद्रोणिकायाम् [२६१] । धारयेदेनां ग्लानः [२६२] । दद्यादुपर्यस्याः चि(पि)धानकम् [२६३] । ग्रीवायां चात्र गण्डोपधानिकाम् [२६४] । न यत्र क्वचन पादौ प्रक्षालयेत् [२६५] । स्थ[ा]नमस्य प्रनाडीमुखम् [२६६] । कारयेरन् पादधावनिकाम् [२६७] । उपरि विहारस्य पूर्वदक्षिणकोणे [२६८] । कूर्माकृतिं खराम् [२६९] । उपस्थापयेत् कठिल्लं मृण्मयं हस्तपदसुभक्ष(?क)णिकावन्तम् [२७०] । मध्ये संनिवे(?वि)ष्टया कदम्बपुष्पाकारया खरया च [२७१] । प्रक्षाल्य स्थापनमवाङ्मुखस्य [२७२] । तलकोपरि सांघिकस्य [२७३] । पौद्गलिकस्य लयने कवाटसन्धौ [२७४] । पात्रनिर्मादनादि यत्र प्रदेशे विहारे कुर्यात् तस्य मार्जनमुदकेन प्र[क्षा]लनं वा [२७५] । कुन्तफला(ल?)काकारेण मृदङ्गस्य वा [२७६] । गोमयेन मृद[ा] वा [२७७] । न विद्यते रक्तार्थतायां प्रलिप्तेराकारस्य नियमः [२७८] । नापात्रकं प्रव्राजयेयुरुपसम्पादयेयुर्वा [२७९] । नोनेनाधिकेन पाण्डुना वा [२८०] । त्रीणि पात्राणि ज्येष्ठं मध्यं कनीयः [२८१] । शेषेणोर्द्ध(र्ध्वं?)मागान्तानन्तराद्कुष्ठोदरात् पक्वतण्डुलप्रस्थस्योर्द्ध(र्ध्वं?) वा तद्वये मागधकस्योद्गाहिसद्भूपव्यञ्जनस्यैतन्न्याय्यम् [२८२] । न भिक्षुण्यूर्द्ध(र्ध्वं?) भिक्षुकनीयसो धारयेत् [२८३] । त्रपुमण्डलकस्यानयात्रा (?) निपादे दानम् [२८४] । बोधिवटपत्रस्य पाणितलकस्य वा [२८५] । परिमाणतः [२८६] । भवति स तत्त्वं याचितेन [२८७] । तद्वत् पञ्चकम् [२८८] । न वर्षस्थपात्रकः स्यात् [२८९] । न जनपदचारिकां चरेत् [२९०] । चरेत् समपतायां कुपात्रकेण [२९१] । प्रव्राजयेदभावे [२९२] । नोत्थितः पात्रं कर्षेत् प्रक्षिपेच्छोपयेद् वा [२९३] । मात्रया परिभुञ्जीत [२९४] । नान्येनात्र निसर्गं प्रक्षिपेत् [२९५] । नानेन संकारं छोरयेत् [२९६] । न चोचं न हस्तमुखोदकं दद्यात् [२९७] । न प्रमदनधर्मणा श्रामणेरेण निर्मापयेत् [२९८] । न सगालुकेन गोशकृता [२९९] ।

नात्यार्द्रं प्रतिशामयेत् [३००] । नातिशुष्कमप्युपेक्षेत [३०१] । न शिलायां स्था[प]येत् [३०२] । नाशुचौ प्रदेशे [३०३] । न यत्र क्वचन [३०४] । नासिन्निक्षिपेत् [३०५] । मालकस्यैतदर्थं करणम् [३०६] । उत्तिष्ठतोर्विहारपरिगणयोर्न भित्तेः [३०७] । न च कोरकस्यारण्यकैः [३०८] । लतामयस्य रज्जुना वा [३०९] । लिप्तस्य गोमयमृदा [३१०] । स तविच(?)विध पिधानस्य [३११] । लम्बनमस्य कान्तारिकया वृक्षे साधु [३१२] । न भूमौ स्थापनम् [३१३] । नैनमस्य (न्य?)त्र नयेत् [३१४] । प्रक्षिप्तं स्थविकायां नयेत् [३१५] । न हस्तेन [३१६] । कक्षयास्य नयनमालयनकं दत्त्वा [३१७] । पृथक् स्थविकासु पात्रभैषज्यकोलाहलानि स्थापयेत् [३१८] । धारयेदेनाः [३१९] । न तुल्यावलम्बानामास्यालयनकानां निवेशमुपयुञ्जीत [३२०] । अविस्तीर्णानाञ्च दुःसानिच्छुः [३२१] । संकोचासंपत्तये न मतदानं मध्ये [३२२] । स्थानायास्यान्तरान्तरे काकपादके दानम् [३२३] । चक्षुरिव पात्रं पालयेत् [३२४] । त्वचमिव सांघाटीम् [३२५] । शिष्टं च चीवरम् [३२६] । न प्रतिसंस्करणमुपेक्षेत [३२७] । अनुतिष्ठेत् पात्रबन्धनं प्रति गुप्तिप्रदेशे [३२८] । उपस्थापयेत् संघः कर्मारभाण्डिकाम् [३२९] । छिद्रस्यैतद् साधु गुडजतुसिक्थत्रपुशीर्षैः [३३०] । साधु पट्टिका-कीलिका-थिग्गलिका-मकरदन्तिकाभिः [३३१] । चूर्णिकया लोहस्य पाषाणस्य वा [३३२] । तैलेन घृष्टिरासिक्थसाद्रपालीहेत कुरुविन्देन वा [३३३] । उष्णे दानम् [३३४] । अवगुण्ठ्य भूर्जेन मृदानुलिप्य पाकस्य मध्यस्य [३३५] । घृष्टिस्तैलेन गुडमृद(मृगमद?)मृन्मयस्य भुज्यमानत्वे पाक्यत्वं मासपर्यन्ते [३३६] । मार्तञ्चेत् पक्षस्य [३३७] । वर्षाश्चैतद् विलक्षणे प्रक्षितत्वेन कार्यान्तरालेऽस्य संयोज्यत्वम् [३३८] । पचनमस्य [३३९] । नवदारमना कर्तुं युक्तम् [३४०] । कटाहकस्य तदर्थमुपस्थापनम् [३४१] । तदनुत्पत्तेः [३४२] । कर्परकस्य वा [३४३] । भसनः पूरयित्वा साधु भेदनं घटभेदनकेन [३४४] । धारणमस्य [३४५] । तेनावछा(?)दनमपलापि धूमम् [३४६] । दत्ततुपमृत्तिकाबहिः लेपेन [३४७] । पिण्याकेन गोमयेन वा लिप्ताभ्यन्तरेण उपगतशेषेण [३४८] । कृतपरिकर्मायां भूमावास्तृततुपायामवकीर्णरुचिरधूमकरकपिण्याकादिद्रव्यायां तस्याधोविलम् [३४९] । गोमयेन वा पलालेन भावगुण्ठ्यादीपनम् [३५०] । सुशीतलस्यापनयनम् [३५१] । आनिष्पन्नरङ्गसंपचेरावृत्तिः [३५२] । निर्माय निर्मायारोपन(ण)म् [३५३] । सामन्तकस्य प्राणकानामनुकम्पया सम्मार्जनं सेकश्च [३५४] । प्ररोहस्य परिव्यञ्जनमशक्तो वर्षाग्रस्योपसंपद्यङ्गीकरणं व्याजेनास्य प्रत्यवेक्षणम् [३५५] । उद्यनागदन्तकचीवरवंशस्थभावावतारणादिना [३५६] । नोपसंपन्नप्रेक्षं वृक्षमधिरोहयेत् [३५७] । न बहिःसीमां प्रेषयेत् [३५८] । दर्शनोपविचार एनमवकाशने स्थापयेयुः गणाभिमुखं प्रगृहीताञ्जलिम् [३५९] । न गृहिणि(णो) निःश्रयानारोचयेत् [३६०] । नोपसंपन्नमात्राय नारोचयेत् [३६१] । वस्तुकर्मोपस्थापकपरिहारेणैनं परीच्छेयुः [३६२] ।

दहरमस्य भावे वृद्धतरमापृच्छेत् (३६३) । भावेऽप्युपनिःश्रयत्वेन (३६४) । नानवलोक्य तज्जातीयं परिकर्मयेत् तेन वात्मानम् (३६५) । निर्दोषमभावे प्रवृत्त-पर्येषणं(ण?)स्यानिःश्रितस्य वापि (३६६) । अपञ्चरात्रनिष्ठानात् (३६७) । अर्हत्वश्च लाभे (३६८) । विश्रम्यागन्तुको द्वितीये तृतीये वाह्नि निःश्रयं गृह्णीत (३६९) । नैकाहस्यार्थे (३७०) । अन्यमसान्निध्ये निःश्रितस्यापृच्छेत् (३७१) । निर्दोषमनापृष्टौ गतस्य कर्मादानेऽपरंतदागतौ (३७२) । न यस्य तस्यान्तिकात् (३७३) । निर्ज्ञाय वृत्त-ज्ञानपरिवारानुग्राहकत्वं प्रश्नादिनास्य ग्रहणं संवरवत् (३७४) । प्रपीड्योभाभ्यां पाणिभ्यामुभौ पादतलौ (३७५) । परीक्ष(क्ष्य ?) दानम् (३७६) । पुत्रपितृसंज्ञयोः निवे-शनम् (३७७) । तत्रैवोपाध्याये निःश्रितत्वं तस्माद्ग्रहणमस्य तत् (३७८) । निरपेक्ष-तासंपत्तिरुभयोरान्त(रन्ते ?)निःश्रयध्वंसे कारणम् (३७९) । सन्निपत्वान(पाते ?)नो-पाध्यायेनाभिमतेन प्रवृत्तिः (३८०) । तेनैव तेन (३८१) । निरन्तरं दृष्टोपाध्याय आसनं मुञ्चेत् (३८२) । त्रिर्दिवसेन निःश्रितमुपसंक्रा(क्र?)मेत् तद्विहारस्थः (३८३) । अरण्यवासी क्रोशे चेत् प्रत्यहम् (३८४) । पञ्चपरहोभिः क्रोशपञ्चके (३८५) । पौषधे द्वितृतीयैर्योजनेषु (३८६) । न निःश्रितमवसादनार्ताना(?)वसादयेत् (३८७) । पञ्चा-वसादनाः (३८८) । अनालापोऽनववाद उपस्थानधर्मामिषैरसंभोगः प्रारब्धकु-शलपक्षसमुच्छेदो निःश्रयप्रतिप्रश्रम्भणञ्च (३८९) । अश्रद्धस्यैतदर्हत्वम् (३९०) । कुसीतस्य दुर्वचसोऽनादृतस्य पापमित्रस्य च (३९१) । अवसादितसंग्रहेऽन्यस्य स्थूला-त्ययः (३९२) । अनादृतौ भिक्षोः प्रगुणीकरणाय प्रयोगोऽभिज्ञस्य (३९३) । त्यक्त-निमित्तस्य क्षमणं क्षमयतः (३९४) । नानर्चे(नार्त?) मवसादयेत् (३९५) । नार्तस्य न क्षमेत (३९६) । नान(नार्तस्य) क्षमेत (३९७) । सर्वथा निष्कासनमकरणीयतायां लप-नात् (३९८) । परिश्रावणकुण्डिके दत्त्वा सान्तरोत्तरञ्च श्रामणेरस्य (३९९) । उपसंप-न्नेऽक्षश्चेत् पंच परिस्कारान् (४००) । उपसंपन्नस्य च (४०१) । न सिद्धनिष्ठुरो भवेत् (४०२) । न विघातसंवर्तिनं क्रियाकारं कुर्वीरन् (४०३) । पलिगुद्धतापर्युषितत्वमास्यस्य (४०४) । विसर्जयेत् दन्तकाष्ठम् (४०५) । प्रतिच्छन्नम् (४०६) । उच्चारप्रसावक्रिया वा (४०७) । नोपभोगस्यान्ते वृक्षस्य कुड्यस्य वा (४०८) । प्रम[ा]णमस्य द्वादशकादङ्गुलीनां प्रभृ-त्याऽष्टकात् (४०९) । आचतुष्कोत्तरादभावे बहुश्लेष्मणः (४१०) । नायुक्तत्वं विजनस्य लपने कठिल्लकस्योपरि (४११) । नासंपचितत्र गुप्ते प्रणाडीमुखे (४१२) । हस्तसामन्त-कस्यान्नैवंजातीयके संभाव्यर्थम् (४१३) । जिह्वामस्यानु निर्लिखेत् (४१४) । उपस्था-पयेज्जिह्व[ा]निर्लेखनिकाम् (४१५) । शुचिद्रव्या (४१६) । कल्पतेऽत्रार्थे दन्तकाष्ठवि-दलः (४१७) । परस्परमस्याः तीक्ष्णतायै घृष्टिः (४१८) । न तीक्ष्णेन दन्तं जिह्वां कर्ण-श्रोच्छ्लेपे(? छ्लेखे)त् (४१९) । नाशनैः (४२०) । अवाघ(घाव ?)यंस्तन्मासम् (४२१) । नाप्र-क्षाल्य दिघं (?) मुखमलेन प्रदेशमनवगुण्ठ्य वा पांशुना दन्त-जिह्वयोः यवनं

छोरयेत् (४२२) । नाविशब्धम् (४२३) । निदर्शनमेतत् (४२४) । उच्चारप्रस्रावखेटसिंघाणकवान्तं विरिक्तमस[ा]न्यच (४२५) । निर्मादनस्नातोऽपि संपत्तिरूपाड्कगोमयादपि (४२६) । चैत्यमनन्तरं कायकरणीयानुष्ठानाद् वन्देत (४२७) । अथ निःश्रितप्रतिपत् (४२८) । अतोऽनन्तरं काल्यमुपसंक्रम्य वन्दनम् (४२९) । वार्तापृच्छनम् (४३०) । ऊपादु(द्व)कोदकदन्तकाष्ठोपनामनम् (४३१) । महानसमवलोक्य मारोचनम् (४३२) । प्रियस्योपनाम्यत्वेन मनसि करणम् (४३३) । पात्रनिर्मदनम् (४३४) । पिण्डपातिकश्चेद् द्रावकस्य च (४३५) । सप्रयोजनं परिश्रावणस्यापि (४३६) । सोऽपि चेत् प्रश्नः (४३७) । माहं चेदभिरुचितं तेनैव महप्रवेशः (४३८) । विषमादौ पुरतो गतिः (४३९) । प्रणीतस्य तस्मै परिणमनम् (४४०) । असह(?) चेदागत्योपदर्शनम् (४४१) । वरतरस्योपनामनम् (४४२) । मात्राज्ञोऽसौ सर्वत्र स्यात् (४४३) । उदकस्थालकपूरणम् (४४४) । कालारोचनम् (४४५) । भुक्ते पात्रादिनिर्मादनम् (४४६) । स्नापनमस्य (४४७) । चैत्यादिवन्दनायामूपाड्कोदकाद्युपनयः (४४८) । पादप्रक्षालनगतानुष्ठानम् (४४९) । शयनासनप्रज्ञपनम् (४५०) । प्रतिनिवासनार्पणम् (४५१) । निवासनग्रहणम् (४५२) । पादोदकाधिष्ठानकठिल्लोपनामनं उपान[त्]प्रोञ्छनम् (४५३) । असम्मतमुत्थानकारकत्वेन गृहीतसम्मार्जनीकं दृष्टाल्पोत्सुकं कुर्यात् (४५४) । गृहीतसूचिकं चासम्मतं चीवरसेवकत्वेन (४५५) । कल्पिकीकरणाल्पहरितत्तापादनपुष्पफलोच्चयदन्तकाष्ठोपसंहाराद्यपि श्रमणोद्देशे (४५६) । अर्गटकाकोटनेनाभ्यन्तरस्थं बोधयेत् (४५७) । शनैरेतत् (४५८) । नातिवेलम् (४५९) । नाघेन (?) प्रपीड्येत् (४६०) । शनैः संप्रजानन् प्रविशन्निष्कामन्नासंघर्षयन् द्वारशाखे (४६१) । प्रकृत्यादेनम् (४६२) । आलि (?)पेत् (४६३) । न तद्विरुद्धम् (४६४) । अपत्रपेतातः (४६५) । दक्षोऽस्य कृत्ये स्यात् (४६६) । सत्कृत्यकारी प्रासादिकप्रस्थानः (४६७) । ह्रीमान् सगौरवः (४६८) । सप्रतीशः (४६९) । नीचचित्तः (४७०) । संप्रजा[न]न्न हापयेत् स्वकार्यम् (४७१) । किंकुशलगवेषी (४७२) । विक्रियामापद्यमानं निवारयेत् (४७३) । अशक्तौ कुशलेनान्यत्र तत्कारके(? कै)रसमर्पणां याचेत (४७४) । निश्राय निःश्रयायार्पयेत् (४७५) । पापमित्राद् का(वा ?)रणम् (४७६) । कुशले नियोगः (४७७) । तदुपसंहारः व्युत्थापनायामापचेरानुलोमिकाजीवितपरिष्कारसंपत्तौ चोद्योगः (४७८) । सार्द्धंविहार्यन्तेवासिकोपाध्यायाचार्यसमानोपाध्यायसमानाचार्यालक्षकसंलक्षकसंस्तुतकसंसमकं ग्लानमुपतिष्ठेत् (४७९) । पूर्वक्रियाभावादुत्तरः (४८०) । पाठाचार्यस्याप्यत्र गृहीतता (४८१) । सा ह्यशक्तौ निःश्रितं येन प्रवृत्तिः (४८२) । प्रव्रजितवदत्र प्रारब्धतल्लिङ्गः (४८३) । न ग्लानसब्रह्मचारिणमभ्युपेक्षेरन् (४८४) । उपस्थायकमस्याभावे ददीरन्नान्तात् (४८५) । कल्पते भैषज्य[म]स्य संघतः (४८६) । केवलस्य ग्लानस्य परिभोगः (४८७) । असच्च अतदुपस्थायकः समादापयेत् (४८८) । असंपत्तौ सांघिकं ददीरन् (४८९) । अभावे बौद्धिकमाशरीरगतात् (४९०) ।

यानकच्छत्रारोपणादिकारानेनमुद्दिश्य कुर्युः सांघिकात् (४९१) । अभावेऽस्य वोन्धि-
(धोन्दि)कात् (४९२) । देयत्वमाभ्यामाचार्यस्य तेनामृत्यौ सति विभवे (४९३) । नोप-
स्थायक एनं नोपतिष्ठेत (४९४) । नान्यामस्य धर्म्यांश्चाज्ञां विलोमयेत् (४९५) ।
नाध्यवसानवस्तूपयाचितो विधारयेत् (४९६) । न नाववदेत् (४९७) । नैनं ग्लानो
लंघयेत् (४९८) । सांघिकादेनमसौ मरणाशंकायां शयनासनादुत्थाप्य पौद्गलिके
निवेशयेत् (४९९) । अभ्यङ्गनस्नापनपूर्वकत्वाव्याजेन (५००) । यत्नवांस्तदवस्थापरिच्छेदे
स्यात् (५०१) । तत्कार्यत्वं तत्कृतसंक्लेशानां तन्मृतचीवराणां धावनस्य (५०२) ।
संघस्य तत्स्थविरसंनिपातपूर्वंगमः स्यात् (५०३) । गमने विलंबितमुदीक्षेत (५०४) । तेऽप्ये-
नम् (५०५) । अनिर्गतश्च दूरं गत्वा (५०६) । ग्रामान्ते च (५०७) । प्रवेशश्चेदत्रानुय-
न्तम् (५०८) । द्रुतश्चेत् स्याद् "आगमय यावत् स्थविर [आ] गच्छति" इति तं
ब्रूयुः (५०९) । पाण्युदकदाने च गतत्वेऽभ्यवहारायास्ति चेत् कालः (५१०) । असत्य-
त्रोपवेशेऽस्यासनं मुञ्चेरन् (५११) । सन्निषण्णतायां बहिश्च प्रत्यवेक्षेत (५१२) । दुःप्राप्त-
तत्वे दुर्निवस्ततायां वा सौष्ठवार्थमनयोर्निमित्तमस्मै कुर्वीत (५१३) । अप्रतिषेधे न
(प?)रेण कारयेत् (५१४) । असंपत्तौ स्वयं नैनान् संलापयेन्नवकान् (५१५) । यत्रैषां
विहारारण्ययोर्वृत्तिस्तद् वृत्तं ग्राहयेन्नियुञ्जीत च (५१६) । आगन्तुकं प्रत्यवेक्ष्यावा-
सिकानामारोचयेच्छयनासनार्थम् (५१७) । गमिको दिक्सार्थावासशयनासनं सहा-
यकांश्च ग्लान्येन सहायित्वेन तोलयित्वा प्रक्रामेत् (५१८) । सर्वं पश्चात् मा कस्य-
चित् किञ्चित् प्रमुषितमित्यपेत्य दूरमुत्सारयेत् (५१९) । अनुद्धतानुन्नद(ड?)त्वे
नवकान् प्रतिष्ठापयेत् (५२०) । कुलश्चोपगतान् सर्वः सर्वान् (५२१) । संजानीत चाद्येद्यो
(? घेद्याद्यो)पदेशादिभक्तलाभग्लानसंविधानादिकरणीयसंपादनेनानुगृह्णीत (५२२) ।
वर्षोपगतोऽनुसंज्ञाय विहारमप्रतिसंस्कुर्वतः संस्कारयेत् (५२३) । संस्कुर्वतोऽभ्युत्साद-
(ह)येत् (५२४) । पर्षद्गतान् सर्वः कथैषितायामानुलोमिकधर्मोपसंहारेणानुगृह्णीत (५२५) ।
तूष्णींत्वेऽरतानुपेक्षेत (५२६) । गृहिण उपगता[न्] भक्तान् संविभाजयेत् (५२७) ।
अकरणे निष्ठैवाधर्म्यामेभ्यः "कथं कृत्वेदमस्माकं संविद्यत" इति ब्रूयात् (५२८) ।
पर्षदं तद्वान् सर्वः प्रत्यवेक्षेत (५२९) । मुधाचारिणं निगृह्णीयात् (५३०) । गमनाद्
यत्र पर्थै[त]त् कुर्पात् (५३१) । अनानातिर्यक्कथस्स्यात् (५३२) । न पुरः पश्चाच्चङ्क्रमण
उपगच्छेत् (५३३) । न तिष्ठेत् (५३४) । उक्तो ब्रूयात् संपादयेद् वा (५३५) । नान्तरक-
थामवपातयेत् (५३६) । अधर्मं भाषमाणं प्रतिवदेत् (५३७) । धर्ममनुमोदेत (५३८) ।
उत्पन्नं धार्मिकं लाभं प्रतिगृह्णीत (५३९) । अनुद्धतः कुले स्यादनुन्नडानवस्थितः (५४०) ।
उत्क्षिप्तचक्षुः (५४१) । धर्म्यां गृहिभ्यः कथां कुर्यात् (५४२) । दानदमसंयमब्रह्मचर्य-
वासोपौषधशरणगमनशिक्षापदग्रहणेष्वेनान्नियुञ्जीत (५४३) । सर्वत्रापत्तिपुरभूते
प्रस्थाने स्मृतः प्रतिपद्येत (५४४) । न नशिष्टोऽतुरः (५४५) । एहिस्वागतपूर्वप्रिया-

लाप्यभिगते स्यात्[५४६] । उत्तानमुखवर्णः स्मृतपूर्वंगमो विगतभ्रूकुटिः[५४७] । गृही चेद् धर्म्यामस्मै कथां कुर्यात्[५४८] । अनागच्छत्यत्र ग्रामान्तिकस्संरञ्जनीयं यथाशक्ति प्रवर्तयेत्[५४९] । पानीयामनमुपस्थापयेत्[५५०] । संमार्गशमनासनप्रज्ञपनपानीयस्थापनचारणः भक्तनिःसर्गोन्नरकः कुर्यात्[५५१] । उपगच्छेद् विलोमां परिजनक्रियां न चेत् स्वपरोपघाताय[५५२] । असै चेच्छक्तौ समुच्छिद्यैनां धर्म्यामुत्पाद्य तया संज्ञपयेत्[५५३] । भङ्गे प्रसंगे वा तन्निदानं परिजनस्य प्रतिसंस्करणम्[५५४] । अशक्तत्वेऽन्येन प्रक्रमन(?ण)म्[५५५] । न तत्प्रत्ययं विगृह्य ब्रूयात्[५५६] । संघारामे पराध्यां(?)स्तथा कुर्याद् यथा स्वयंग्राहिकया ग्रहणं गच्छेत्[५५७] । अगच्छत्तमनारोच्य सहसा कस्यचित् कुमारमित्राम[।]त्यमहूराजपुत्रपादमूलिकान्[५५८] । ग्राहयित्वा शुद्धिकायां पर्षदि निहन्यात भिक्षुणी भिक्षुस्थाने सर्वस्य प्रव्रजा(?व्रज्या)याम्[५५९] । उपसंपद्य न्यस्य तद्याचनादौ कर्मकर्तुः अश्राचयस्संघः[५६०] । कथनं भिक्षुण्यन्तरितमान्तरायिकस्य[५६१] । शिक्षमाणात्वं नाम स्त्रियामपरं पर्व[५६२] । निःश्रितायामेव[५६३] । श्रामणेरिकात्वभिक्षुणीत्वयोरन्तराले वर्षद्वयश्चरणस्य कालः[५६४] । तदूनोपसंपत्कालाद्यादिः प्ररोहस्य[५६५] । द्वादशत्वं वर्षाणामुपसंपत्त्व(रू?)ढतायामादिः[५६६] । दानादुत्थानम्[५६७] । भिक्षुणीसंघेन[५६८] । शिक्षासंवृतिरिति दानम्[५६९] । अनन्तरमस्य शिक्षोत्कीर्त्तनम्[५७०] । नालब्धब्रह्मचर्योपस्थानं संवृतेरुपसंपत्[५७१] । रहोनुशासनाद् रूढं तद्दानम्[५७२] । संघेन[५७३] । पृष्टान्तरायिकम्[५७४] । याचितायाम्[५७५] । पञ्चत्वं चीवरेषु[५७६] । निःश्रयेषु वि(?)वृक्षमूलत्वम्[५७७] । अष्टत्वं पतनीयेषु[५७८] । गुरुधर्मारोचनम्[५७९] । पतनीयश्रमणकरकान्तरात्रे[५८०] । कृतपट्टके[५८१] । नास्त्यस्याः प्ररोहणधर्मत्वे(ते ?)ति च[५८२] । उभयव्यञ्जना[५८३] । संभिन्नव्यञ्जना[५८४] । सदा प्रस्र(?स्र)वणी[५८५] । अलोहिनी नैमित्तिकी[५८६] । निमित्तमात्रभूतव्यञ्जना तदाख्या[५८७] । पूर्वं प्रव्रजिता[५८८] ।

॥ क्षुद्रकादिप्रव्रज(?ज्या)वस्तुगतम् ॥

§४, पृच्छागतम् ।

नामनुप(?व्य)गतिकोत्तरकौरवकयोः[५८९] । संवासं क्षेत्रत्वम्[५९०] । न तृतीयस्यां परिवृत्तो व्यञ्जनस्य[५९१] । न प्रथमयोर्वस्तिः[५९२] । उत्थानं गृह्यमानत्वे[५९३] । अनुपाध्यायकतायां तद्वतः[५९४] । अनुपसंपन्नत्वेऽस्य[५९५] । न जानानेऽस्याभिक्षुत्वम्[५९६] । नैनं प्रत्याचक्षणे[५९७] । नानयोर्नामानुच्चारणे[५९८] । न संघस्य तद्योनेः[५९९] । नागारिकतीर्थिकध्वजे[६००] । न नग्नकुपितसुफालिनीषु[६०१] । न निमित्तविपर्ययानभ्युपेतावुत्क्षिप्तकस्य[६०२] । दुम्(?घ्)कृतमात्रमपूर्वसर्व(?)तायाम्[६०३] । अयाज्ञा(?ज्ञा)यामुपाध्यायस्य[६०४] ।

आन्तरायिकेस्याप्रश्नो(?श्ने) प्रतिज्ञातेऽस्यासतो दानम् [६०५] । न पुरुषानुकृतित्वं स्त्रिया स्त्र्यनुकृतित्वं च पुरुषस्य व्यञ्जनान्तरप्रकारः [६०६] । आक्षिप्तत्वमस्य हस्तच्छिन्नादिना [६०७] । पापलक्षणभिन्नकल्पद्वीपान्तरयोः [६०८] । एकनख-समुद्रकलेखपक्षहतलिङ्गशिरो गुल्मकेशान्तर्वहिर्विकुब्जप(?स)र्पहितानङ्गुलियक्ष्मन-कुलकिंबिलविपरीतमिलितसिक्थकस्मीलिताक्षाक्षाक्षिशालशक्तदद्रूविचर्चिकपीता-वदातरक्तनाडीकर्णकण्डूपिण्डस्थूलकच्छुण्डलांगुलप्रतिच्छन्नमूर्धजित्वैकहस्तपाद-नीलकेशहस्त्यश्वगोमेषमृगमत्स्या हि दीर्घवहशीर्षतालकण्ठशूलेर्यापथच्छिन्नेभ्य-श्वानावाधिकानां ग्लानेन चेतरेषाम् [६०९] । चौरेण दस्योः [६१०] । पितृवत् पित्रा-शापत्ये(?)नुज्ञायां राजा [६११] । परिग्रहीत्रोरनुज्ञानधारणारोचनेषु पितृत्वम् [६१२] । नामनुप(?प्य)गतिक्रियोः [६१३] । नात आनन्तर्योत्थानम् [६१४] । जनकाभ्यामे-तत् परि(?)पत्तव्यम् [६१५] । नाभ्यामपि [६१६] । एतत्कृत्वं मातृघातकादौ तन्नम् [६१७] । दूषकत्वमब्रह्मचर्येण स्वादयतोरपराजितत्वे [६१८] । अर्हत्वं प्रव्रज्योप-संपदोरुपगतौ पुंस्त्वस्य हीनायां योषिति [६१९] । असाधारणं पाराजिकमध्या-चरितवत्यम् [६२०] । आवासिकानां स्वयुपसंपादनेऽङ्गत्वम् [६२१] । ध्वंसो भव-त्यस्योत्स्पृष्टः [६२२] ।

॥ पृच्छाप्रायं प्रव्रजा(? ज्या )वस्तुगतम् ॥

॥ समाप्तं च प्रव्रज्यावस्तु ॥

ॐ

# २. पोषधवस्तु ।

## §१, पाराजयिकम् ।

### (क) भिक्षुविभ. (१) अब्रह्मचर्यपाराजयिकम् ।

[ प्रत्याख्यानविधिः ]

न नष्टप्रकृतिकृततां प्रत्याख्यातत्वम् [१] । न तत्रम् [२] । न मूके [३] । नामनुप(?प्य)गतिके [४] । नात्रोधिसत्वे [५] । न रहसि [६] । न रहः-संज्ञया [७] । शिक्षां प्रत्याचक्षे बुद्धं धर्मं संघं सूत्रं विनयं मातृकामाचार्य-मुपाध्यायमागारिकं मान्धारयश्रमणोद्देशं पण्डकपण्डकाभिक्षुणीदूषकं स्तेय-संवासिकं नानासंवासिकमसंवासिकं तीर्थिकं तीर्थिकापक्रान्तकं मातृघातकं पितृ-घातकमर्ह[द्]घातकं 'संघभेदकं तथागतस्यान्तिके दुष्टचित्तरुधिरोत्पादकमलं मे युष्मद्विधैः ब्रह्मचारिभिः सार्द्धं संवासेन वासभोगेन चेति प्रत्याख्यानवच-नानि [८] ।

॥ प्रत्याख्यानविधिः ॥

ॐ

(क) विभंगगतम् ।

प्रविष्टस्पर्शस्वीकृतौ प्रथा(?स्रा)वकरणस्य [९] । तत्र [१०] । अविकोपिते [११] । मुखे वर्चोमार्गे वा [१२] । विकोपितेषु स्थूलम् [१३] । अप्रतिबलत्वे ह्रासः [१४] । अह्रासममनुष(?ष्य)गतिकत्वयास्रपत्र(?) कवासिवसेव्यसान्तरत्वमृततासु [१५] । असंचेतितनष्टप्रकृत्योरवर्पाकामप्रविष्टत्वे [१६] । प्रकृतायां सेव्यमानस्य [१७] । बहिर्निर्घर्षपूर्वकत्वेऽन्नन्तर्मुक्तपरतायाम् [१८] । नायुष्मो दिवा पार्श्वं दत्त्वा मिद्धमवक्रमेत [१९] । तिस्रो गुप्तयः [२०] । बद्धद्वारपरिवृतस्थत्वमारक्षितत्वं भिक्षूणां ग्रथितत्वमधोनिवसनस्य [२१] ।

॥ अब्रह्मचर्यपाराजिकभङ्गः ॥

ॐ

(ख) क्षुद्रकगतम् ।

न यत्र स्त्रिया काम्येत तत्रोपसंक्रामेत [२२] । न यत्रामनुषो(?ष्यः) स्पर्शायोद्यतः तत्र निवसेत् [२३] । धारयेत् तीव्ररागो वस्तिम् [२४] । छागचर्मणो मृगस्य मूषिकस्य वा [२५] । कषाय[पा]नमदौर्गन्ध्यार्थम् [२६] । शोधनं शोपथ [२७] । तत्कालार्थमपरम् [२८] । प्राभृत्येन द्रवीभूतावास्तरदानम् [२९] । वालुकायाः पांशोर्वा [३०] । निक्षिप्य शौचं कृत्वा भोजनचैत्यवन्दनम् [३१] ।

॥ क्षुद्रकगतमब्रह्मचर्यपार[ा]जयिकम् ॥

ॐ

(ग) पृच्छागतम् ।

दन्तात् परं मुखस्यादिः [३२] । वर्चोमार्गस्य विलगण्डिकान्तात् [३३] । चर्मपुटात् प्रस्रावणस्य [३४] । मणेरस्य प्रविष्टता तदन्तः [३५] । प्रदेशस्यास्वादष्टत्वं दष्टता शून्यत्वं क्लिन्नता शटितत्वं खादितता प्राणकैरिति विकोपितता [३६] । न मध्यच्छन्नत्वे मध्यस्याप्यह्रासः [३७] । अप्रज्ञाने च सन्धेः घाटितस्य मध्यासेव्यस्य पंडितस्य [३८] । प्रज्ञानेऽनन्तरं पर्व [सन्धे] [३९] । स्थूलकृत्यपकस्य निर्लोम्नः शूकरादेः [४०] । शिरछि(श्छि)न्ने मुखस्य [४१] । पृथक्कृतयोः कायात् सेव्यसेवनयोः [४२] । अन्ययोरपि परकीययोः परत्र समायोजने [४३] । अन्यस्य छिन्ने कायेपि छिद्रस्य [४४] । सेव्यस्य मातन्तरस्य पण्डिकायाम् [४५] । वाहस्य सीम्नः परस्तात् [४६] । प्रसेविकायाः [४७] । द्विगुणीकृता स्पृष्टिप्रवेशयोः [४८] । तदन्त्योक्तावन्तरणमभिसंहितं येनान्तरितस्य न सर्वेण सर्वमसंभावनं स्पृष्टेः [४९] । अन्येनान्तरितत्वमस्पृष्टिप्रवेशेन व्याख्यातम् [५०] ।

॥ प्रथमे पाराजयिके पृच्छागतम् ॥

ॐ

## (घ) विनीतकानि ।

भिक्षुभावासंचेतनं प्रकृतिनाशः [५१] । द्वयं विकोपितत्वमन्तः बहिश्च [५२] । कुपितत्वं शिक्षायाः सेवां प्रति परस्याभ्युपगतौ [५३] । देयत्वमत्र पुनरस्याः [५४] । स्थूलमस्यां भिक्षोः [५५] । संग्रहगतौ च [५६] । प्रवेशनार्थं व्रणपीडने [५७] । भीतिलज्जयोः संरागासंपत्तेः [५८] । स्फोटादंगजातस्य रसासंवित्तौ [५९] । अकर्मण्यप्रवेशने [६०] । हस्तेन हस्तं पादेन पादं सन्धिना सन्धिं वास्तिना वास्तिमस्यघट्टने [६१] । इङ्गितत्वमात्रके संयुक्तस्य [६२] । दारुदन्तशैलवस्त्रमपथी(?)तिकोपक्रान्ताविन्द्रियमात्रस्य चेदयनामः [६३] । सर्वाङ्गेषु स्पर्शदानेषु मौलम् [६४] । पादस्य सेवार्थमुद्यतेनाङ्गजोत्क्षेपे [६५] । बहि[ः]स्पर्शने सेव्यस्य तन्मात्रपरतयाङ्गजातेन [६६] । पराज्ञपने च सेवायाम् [६७] । न प्रकृत्या कर्मण्यत्वमपक्राम(हास)कृत् [६८] । नाग्रपृष्ठयोद्यतयाम्भस्ततोऽन्यतो निष्ठाने [६९] । न शिष्टैरपि मार्गैरुपक्रमिष्य इति [७०] । तद्भ्रष्टोऽहमित्यभिप्रायः [७१] । न रोगापगत्यर्थता [७२] । न मार्गेऽन्यत्वसंज्ञानं विमतिर्वा [७३] । स्थूलकृत्वमनयोरमार्गे [७४] । [अ]नापत्तिरभिद्रुतस्य त्वगुपरिनिपाते [७५] । कण्ठे चाकाममार्त्तया च लम्बने [७६] । स्पर्शने चौष्ठेनौष्ठस्य [७७] । न शुन्याः पुरस्तात् प्रश्वा(?स्रा)वं कुर्वीत [७८] । न यत्र प्राणात्ययापातस्तत्रारण्ये प्रतिवसेत् [७९] । न यत्राङ्गजातादानभयं तां नग्नो नदीं तरेत् [८०] । संप्रजानन्नेनां नावा तरेत् [८१] । गवाश्च सन्धे(मध्ये) गच्छेत् [८२] । उदयनं च प्रेक्षेत [८३] । पिण्डाय च ग्रामं चरेत् [८४] । सुप्रत्यवेक्षितं कृत्वा प्रव्राजयेत् [८५] । नेकाक्यभ्यवकाशे पार्श्वं दद्यात् [८६] । नापावृतद्वारेऽगारे भिक्षुणी समापद्येत च [८७] ।

॥ प्रथमे पाराजयिके विनीतकानि ॥

॥ अब्रह्मचर्यपाराजयिकं समाप्तम् ॥

## ( २ ) अदत्तादानपाराजयिकम् ।

### (क) विभंगगतम् ।

हरणहारणयोः [८८] । दूतेनापि [८९] । अदत्तस्य [९०] । पञ्चमापकादेः [९१] । स्तेयचित्तेन [९२] । मनुप(?ष्य)गितकपरिगृहीतस्य [९३] । तत्संज्ञायाम् [९४] । अनापेतत्वं स्वामित्वस्यापहृतत्वेऽनुत्सृष्टतायामाश्रये न [९५] । भवत्यधिष्ठातुरपात्रागतीये स्वामित्वम् [९६] । असत्वमाशयानुबन्धस्याभ्यवहाराय दाने [९७] । नानभियोक्तृस्वत्वमभिप्रयुक्तानां दवदहादिभिरादानार्थं मृगपक्षिसरीसृपाणाम् [९८] । अनिगलने वस्तुतो व्यवस्था [९९] । हारस्थानकालेन मूल्यस्य [१००] । नानभिप्रेतादापत्तिः [१०१] । सभानकोऽलिकविश्वासचित्तैः परिविज्ञाप्य [१०२] । अन्यथा विनास्त-

यचितेन (१०३) । कूपपर्या(?)मोचने (१०४) । प्रयोगे दुष्कृतं सर्वत्र (१०५) । स्थूलमसिक्लिकाये मूलस्य चेत् (१०६) । अनन्तरे चे(?चैं)तत् (१०७) । न्यूनाग्रहृतौ (१०८) । अस्वामिकस्य निधेः (१०९) । स्वस्वान्यगतेः (११०) । अस्वीकृतौ च गोपननाशनवचो (?) सङ्घादौ वियोजने (१११) । दुष्कृतं कारुण्यचित्तेन (११२) । न प्रतिकृतापकृतत्वमादेः (११३) । प्रयोगप्रयोगत्वं प्रागामर्शात् (११४) । अज्ञानौ प्रतिपदं भेदः (११५) । प्रतिसत्वं तद्गते (११६) । न कीलान्मोक्षो नावः यष्टिः (११७) । हारो भारस्य तत्कृत्य हरणे (११८) । निकरस्योचित्य (११९) । स्थानोचमातिक्रान्तिद्रव्यो त (?)मेन निमज्जने (१२०) । नयने सा मतिर्यास्मिन् यथा(?)द्वारे (१२१) । च्युतिरपकाशने पार्श्वाधारस्य पार्श्वान्तरेण सीम्नः (१२२) । न व्यस्तान्तर्गतस्य तद्वत्त्वे (१२३) । तत्र रूपं चाटस्फोटिलै(?)रथावर्णान्तरसन्धिव्यवधयः (१२४) । व्यवधित्वं लक्ष्माणप्रविभागार्थो प्राणिनि(?) पार्श्वादीनाम् (१२५) । स्तरस्य स्तृतत्वे स्थानत्वम् (१२६) । निक्षिप्तवत् प्ररोहः (१२७) । विवेचनभामुक्तास्य भूम्यातदातिक्रान्तिः शुक्ल(ल्क?)स्य (१२८) । मनुष्यस्य संकेते न चेत् तत्संपत्तिः (१२९) । उत्पाटनं पक्षिणस्तथा चेत् (१३०) । मुक्तिर्वधश्च तिरश्चः (१३१) । अनाभासित्वं निबन्धनोर्यू(?)धनाभ्याम् (१३२) । आमासनं मन्त्रैराकर्षणे (१३३) । पूर्वमनुगच्छदपहर्तोर्हानिनिवृत्यप्रक्रमप्रवेशे कोशैर्न तदात्तस्य (१३४) । नावः स्थलकुल्याप्रकीर्णोदकैः (१३५) । अनुत्क्षातश्च (१३६) । तिर्यक्(?)वा नाभापितायां तीरान्तरस्य (१३७) । तत्प्राप्तिरिति तथात्वे (१३८) । तरपुटकातिक्रमः प्रतिस्रोतः निष्पत्तिः स्वकर्मान्तस्य तदर्थं व्यधिकेतरस्यात्तच्छन्देन परकर्मान्तेष्वभ्रमसः (१३९) । प्रेरणेन वारणे वा (१४०) । लब्धिरंशस्य तदर्थमपहर्तॄणां प्रतिपद्वृत्तान्तनिवेदने (१४१) । भूमिचर्यह(?)योः परिक्षेपेण संधिसङ्गतिः (१४२) । जयो विवादेन राजकुले चेत् (१४३) । शुल्ककुले चेन्निराकृतप्रयोगत्वं यस्य (१४४) । अस्य प्रयोगत्वम् (१४५) । अनाशङ्कमपध्व(?)स्तेयचित्तस्य शुल्क(ल्क?)गते दोषोत्थानम् (१४६) । यदाचलं भाण्डस्य तस्य देयत्वम् (१४७) । न मुक्तेऽन्यदीयातिक्रामणं न हारः (१४८) । नामुक्तोऽन्येनातिक्रामयेत् (१४९) । नासंचेतितातिक्रामणासंपत्यै न पतेत (१५०) । आरक्षकंस्थापनं भिक्षोरनेकस्य (१५१) । समुदानेयत्वं तद्भक्तस्य (१५२) । निवारणं तेन (१५३) । आख्यानं प्रक्षिप्ततायाम् (१५४) । चिह्नकरणमसंभवे (१५५) । पुच्छन(?)मादाने (१५६) । स्पृश्यत्वमसंपत्तावन्यथापनयनस्य (१५७) । निर्यातितत्वमप्रतिपातितस्य · निश्चयोपगतौ (१५८) । संवर्धनं पित्रोस्तदर्थोन्मुक्त्यै(?त्तये) (१५९) । रत्नानाञ्च (१६०) । दानमितरार्थादुधारग्रहण(णा)धमर्णम् (१६१) । न सशुल्ककरणीयोन्वाहिं(?)भजेत (१६२) । अतत्त्वं रक्तस्य गोमयनिष्पीड्येनापि (१६३) । छिन्नदशायामस्य च (१६४) । अरूढिस्तन्मतेरधस्ते (१६५) । न पश्वृत्तौ

प्रहरेत् [१६६]। नाविश्वसनीये विश्वस्ततां भजेत [१६७]। तच्चमधरस्योत्तरस्याम् [१६८]। प्रियोऽसौ मनापो गुरुर्भावनीयः पूज्यः प्रशस्यः प्रेताग्रहणेन [१६९]। कृत्या (? कृत्या) प्रतिकर्मणा कर्म पुण्यबुद्ध्या च [१७०]। न भृतिकया [१७१]। न देशनिरुक्तेर्व्यसनम् [१७२]। नापश्रष्टमात्रमतिचिरं धारयेत् [१७३]। उपधिवारिकस्य देयत्वम् [१७४]। संघे तेन प्राव्रजितसंभावनायामुपदर्शनम् [१७५]। अननुमज्ञे स्वामिनः प्रतिसंस्तरोकायामुपनिबन्धनम् [१७६]। नाननुज्ञातात् ग्लानेन तद्भैपज्यं पाचे(यये?)त् [१७७]।

॥ अदत्तादानपाराजयिके विभङ्गः ॥

## (ख) क्षुद्रकगतम्।

न सपरिग्रहमननुज्ञातोऽन्येन कल्पेन स्वीकुर्यात् [१७८]। न स्वीकृतं मोचयेत् [१७९]। याचनं धर्मदेशनया [१८०]। उपार्द्धमूल्येन [१८१]। युक्तं पात्रचीवरस्य स्फुटेनापि ग्रहणम् [१८२]। नासत्संभावना वा ह्युत्सृष्टमित्यमहाजनप्रत्यक्षमधितिष्ठेत् [१८३]। नामनुपा(?प्या)धिष्ठत्वे शवद्रव्यस्यापरिग्रहत्वम् [१८४]। पृष्ठतोऽस्य प्रदुष्टस्य गमनम् [१८५]। अवमूर्त(र्ध?)कं निप[त?]ायोपरिदानं पादान्तात् प्रभृति [१८६]। नाक्षंताद् गृह्णीयात् [१८७]। न स्वयं क्षण्वीत क्षाणयेद् वा [१८८]। प्रतिशमनमेव दन्तकाष्ठे कोशाद्रुकगोमयमृदां यथासुखकरणमकामं संवद्धेनापह(?हि)यमान(?ण)स्य भिक्षोः श्रामणेरस्य वा [१८९]।

॥ अदत्तादानपाराजयिके क्षुद्रकगतम् ॥

## (ग) पृच्छागतम्।

काकणिचतुष्कं मापकः [१९०]। निदर्शनं पञ्चत्वं चतुर्थस्य कार्षापणात् [१९१]। यत्रास्य विंशतिपर्वत्वं तदाश्रित्य [१९२]। हारकालस्थानगणनेनास्य व्यवस्था [१९३]। प्रकर्षपर्यन्तभूतत्वमशक्यकरणमूल्यस्य महत्त्वेन [१९४]। नाल्पत्वेन अस्य न्यूनत्वेन नान्तर्गतत्वम् [१९५]। अतुलरत्नत्वमत्र बुद्धधातोः [१९६]। दुष्कृतं पूजार्थतायाम् [१९७]। निर्दोषत्वं लेख्यस्य [१९८]। विनाश्यापहृतौ तदवस्थस्य हारवस्तुत्वम् [१९९]। अपरिग्रहत्वमुत्तरकुरौ [२००]। वकय (?) वदेतत् [२०१]। तात्कालिकस्यात्मनः स्वामित्वम् [२०२]। देवत्वं निर्वृतस्य [२०३]। प्रयोगवदनुज्ञातस्य निःसृष्टत्वेनोपभोगः [२०४]। दापनं च मन्त्रौषधाभ्याम् [२०५]। पारार्थ्ये च मौलविधम् [२०६]। कल्पेन च [२०७]। विचयनं च रुचितापहारेछा(च्छा)याम् [२०८]। प्रयोगो व्यंसनं द्यूतेन चेत् जितत्वभूतम् [२०९]। एतदत्र हारः [२१०]। तस्य संख्याने [२११]। तत्त्वं लोपाधारोपयो[ः] चिह्नस्य [२१२]। स्थानोत्तरे च निक्षिप्ते [२१३]। निष्पत्तिरत्र हारः [२१४]। तद्वद् वर्गान्तरे गणनम् [२१५]। व्यप-

लापश्च पौर्वेसेतरेषु द्वैतरस्य वा पूर्वेषु । यत्रैतत् सर्वादौ तत्रांशित्वम् । प्राभृतस्य उद्भावनश्चाप्रभवतः । अनादिष्टयाचनश्च । प्रयोगोपलापो वञ्चितकायमित्यकनिष्ठक्षेपाणाम् । संनिष्टपनं हारः । निहितनिक्षेपस्य सह चेद् यात्यनेन पश्चाच्चातः पुरस्ताच्चेत् प्रयोगान्तरत्वम् । नाशनं स्थूरा(?) छेदो मारणञ्च । स्थूलकृच्चं सीमाकाशस्य शुल्क मंक्तौ । निर्दोषत्वमृद्धि-नयनेऽन्यसीम्नश्च । दुष्कृतमुद्योजनस्य । मार्गान्तरोपदेशि[नि?]श्च । न्यूनमुपायादा (दाय?) हारः । पथि वदपथम् । अन्यानयनवत् मुखकण्ठे-नान्त्यस्य स्तेयचित्ततापगतावनुष्ठितत्वम् । न लिप्यादौ हासः । न प्रसज्य भञ्जनं च हारः । न सस्थानस्य । न मारितत्वं कृतता । नैकदेशेन स्थानामुक्तौ । आटनं तेनापनये हारः । निर्गमः स्यन्दकर-कृच्छिद्रप्रेण । एकत्वश्चापश्चिमादत्तोऽत्र द्रव्यस्य । प्रत्यादानं राशेः हारभेदः । नियोज्यानैक्ये प्रनि(ति?)वदंयम् । हर्तृणाञ्च । लभेरकोऽकमत्येन हारः ।

॥ अदत्तादानपाराजयिके पृच्छागतम् ॥

(घ) विनीतकानि ।

प्रागन्ते मृतत्वे प्रतिनिक्षेप्यत्वम् । मृतपरिस्कारत्वं विपर्यये । भ्रातृवत् सघो न तदर्थे हारो न स्वीकारः । स्ववत् स्व[ा]म्यभेदः । नापक्रमणादाननिश्चये वा शैक्षैः हृतौ तद्वत्वम् । नांशस्वीकारेच्छानादाना-भिप्रायः । न तद्गतकर्मानुष्ठानं न तस्य । न सार्द्धविहारित्वं अन्तेवासिता च हारानुत्थाने कारणम् । मर्यादार्थे परिक्षेपे तद्वम् । न स्थितं मर्यादासंचारणस्थानेनाक्षेपः । समक्षान्तेऽप्यनामासित्वं हारो वशीकृततरन फलाद् ग्रहे मनुष्यस्य । नैपात्मनः । न हारे यदभिसंहितं तत्संबन्धादना(?न)भिसहितस्यापक्रमः । स्थूलं यो यद् गृह्णीते तस्य तदिति व्यवस्थायामन्यहारे । सपरिग्रहाच्छ्मशानाद् ग्रहणे । स्नक-घाटचाण्टपत्रपुष्पफलाराम[ा]देर्मत्रैर्वप(त्रै.कर्ष?)णे । आसानुप्रदानेन यदा-श्रमधिरूढेन चैत्रमेप हर्तव्यमिति कायविप्रकारे । नावं च । हृत इति च । मातृपितृभ्र[ा]तृभगिन्युपाध्यायाचार्यस्थू(?स्तू)पसंघादौ संकल्प्य शुल्ककरणीयकरणीयातिक्रमणे । याचतो धारयोरदानसंकल्पे । वण्टने चान्त्यर्थे दत्तस्य । परिगृहीतसञ्ज्ञिनोऽपरिगृहीते । कुल्मासौ (?षौ)-दनसक्तु(क्थु?)मत्स्यमाससखायवस्तुकपिण्डपाद(?त)परिग्रहेनाज्ञातेव्य(?प्य)त्र व-स्तुत्वम् । नानधी(?)टेन । दुष्कृतमनिमन्त्रितभोजने । गमने

चापहत्यै [१६९] । न संप्रधारणाऽस्यातः पृथक्त्वम् [१७०] । निराग्रहमिति स्वप्रत्यवेक्षितं कृत्वा गृह्णीयात् [१७१] । न कायावपा(?सा)दं कुर्यात् [१७२] । न कुलायकं भंज्येत [१७३] । नानुपितस्तत्र वार्षिके चीवरांशे वयतेत [१७४] । न हर्तुर्दानपतिचित्तेन प्रतिग्रहे दोषः [१७५] । नागमस्तेन्यचौराद् ध्वजबंधकाद् गृह्णीयात् [१७६] । शस्त्रल्नं दुर्वर्णीकृत्यातो गृहीतं धारयेत् [१७७] । दानमेवं कृतस्यापि याचने [१७८] । न चक्रकं कुर्यात् [१७९] । न मन्त्रैर्मोचने दोषः [१८०] । मूषिकापहृतस्य च स्वस्यादानेऽन्यभिक्ष्वर्थस्य तदर्थम् [१८१] । न अभिद्रुतस्य लुब्धके(?कै)मृगस्याश्रमं प्रविष्टस्यादाने [१८२] । मृतस्यास्य तेभ्यो देयता [१८३] ।

॥ अदत्तादानपाराजयिके विनीतकाने ॥

॥ अदत्तादानपाराजयिकं समाप्तम् ॥ २ ॥

ॐ

## (३) वधपाराजयिकम् ।

### (क) विभंगगतम् ।

न मरणचेतनानुगुणं ग्लानायोपसंहारे त[दु]पसंहरेत् [१८४] । नाविज्ञ[? प्त]मस्यानुक्तौ मृत्यौ प्रत्यनीकत्यमुपस्थापयेत् [१८५] । न सत्यां गतौ [१८६] । न मरणोपकरणम् [१८७] । मरणार्थादेनमनुष्ठानादुपस्थापको वारयेत् [१८८] । नार्थार्थे परस्य मृत्युनाकांक्षयेत् [१८९] । अकरणीयत्वं चित्तं नाकरणीयकरणानुमोदनस्य [१९०] । जीवितोपरोधे [१९१] । तच्चित्तेन मनुष्यगते(तेः ?) [१९२] । अभेदः कायतत्संबद्धमुक्तपरसमादापनानाम् [१९३] । विषचूर्णगर्तदारुनष्टप्रकृतिप्रेषणोरस्कन्दपत्रकूटवेताडयन्त्रप्रयोगानां पातनस्य [१९४] । जलाग्न्योः प्रक्षिप्तेः [१९५] । धारणस्य शीतोष्णयोः [१९६] । दौत्यप्रेषणादीनां अल्पत्वस्यानुष्ठाने [१९७] । स्त्रीपुरुषपण्डकत्वे घात्यस्य [१९८] । अन्यदा तन्निदानं मृतौ [१९९] । अनिमित्तत्वं विन्य(?)न्वनात् परस्याम् [२००] । स्थूलमभिसंहितस्य मातृगर्भयोः कुक्षिमर्दे [२०१] । अधिवासनायास्तु तन्निमित्तं वधप्रवृत्तेः [२०२] । त्वत्राक्षा मरणोपकरणं ददामीति चोक्तेः [२०३] । अन्यघाते वा तिरश्चो निर्मितस्यापि [२०४] । नानुक्तमवलोक्येन ग्लानाय भैषज्यं दद्यात् [२०५] । वे(वै ?)द्यतत्प्रव्रजितक्लिष्टानामत्रावलोक्यत्वम् [२०६] । व्य[ा]धिना च [२०७] । वृद्धपङ्क्तानां प्रव्रज(?जिता)नां भिक्षूणाम् [२०८] । पूर्वाभावे परस्य [२०९] । अभावो मरणाय हितकामतया भैषज्यानुप्रदाने हासस्य [२१०] । नासह्यभारोऽत्र क्षेपे साहाय्यं भजेत [२११] । भजेत रूपश्चेत् प्रत्ययो व्यवकीर्णतायां गृहस्थैर्नियुक्ततायां समोत्क्षेपे [२१२] । स्थापनेऽपि समत्वे नियुञ्जीत [२१३] । नेष्टकाः क्षिपेत् [२१४] । न घटितां स्फुटितां वा नारोप्य तत्त्वमर्प्पयेत [२१५] । कुर्यात् तस्करपरिभुत्यै किञ्चित्करम् [२१६] । क्षिपेत् परिकृतां संगण्ठादि [२१७] । अनुवातं च

पांसुघटभस्मकर्परम् । धारयेत् क्षं(?)पनम् । न श्रान्तं क्षिपेद्भिक्षुम् । सनाथ्यस्याप्यकरणम् । विश्रामणम् । भाण्डिकदानम् । अशक्तौ श्राम्रुमानासं समं चेन्न काले भक्तस्य पानकस्य वा । पात्रनिर्मादनम् । गात्रीस्थापनम् । प्रतिग्रहणम् । प्रत्यवेक्षणम् । काले चेत् प्रत्युद्गमनमादाय ।

॥ वधपाराजयिके विभङ्गः ॥

(ख) क्षुद्रकगतम् ।

हस्तच्छेदनं मनुष्यगतिकस्य स्थूलम् । दावेऽग्निदाने । केशविक्रये । राजकुले येन मुषितस्तस्यार्पणे ।

॥ वधपाराजयिके क्षुद्रकगतम् ॥

(ग) पृच्छागतम् ।

नियोगोपदेशः । निदर्शनं मातृगर्भः । स्थूलमात्मनो घाते । दुष्कारोऽसाधुरविकृतचित्तस्य कारः । नासंहितार्थसंपत्ते[ः] कर्तृत्वम् । न जन्मान्तरे कर्मोदयः ।

॥ वधपाराजयिके पृच्छागतम् ॥

(घ) विनीतकानि ।

स्थूलं मृत्युरेवं मे भवतीति ब्रुवाणस्याप्रतियता तथात्वसंपादने मृग्य(?म्रि)तामित्यनु[प]स्थानैः ग्लानस्य । असंप्रेयाभ्यवहार्यदाने । गण्डस्यापरिपक्वस्य पाटने । गर्तप्रक्षेपकपाटपीडनादौ पातने । प्रपातोत्सर्गोद्बन्धादौ मरणार्थेऽनुष्ठाने । न ग्लानाय सहसा शस्त्रकं रज्जुं वा दद्यात् । संप्रजानं वैयावृत्यं कुर्यात् । मन्त्रचपेटञ्च दद्यात् । प्रहारश्वादेरपनोदाय तच्छू(?)त सुप्रत्यवेक्षितं कृत्व(?त्वा) लेखयेत् । नाल्पांशो गुरुभारोद्यमं कुर्यात् । नावमुर्धको गच्छेत् । नाशिक्षितः शिक्षां योजयेत् । न प्रहरणमुक्ताबाधापयेत् । न ग्लानमसमर्थनि(?) नयेत् ।

॥ वधपाराजयिके विनीतकानि ॥

॥ वधपाराजिकं समाप्तम् ॥ ३ ॥

(४) उत्तरप्रलापपाराजयिकम् ।

(क) विभङ्गगतम् ।

विनिधाय संज्ञामुत्तरमनुष्यधर्मयुक्ततोक्तात्मनः । तत्रं पश्यामि मां पश्यन्ति शब्द[ा]न् शृणोमि मम शृण्वन्त्युपक्रमामि मामुपसंक्रामन्ति सार्द्धमा-

लपामि संलपामि प्रतिसंमोदे सातत्यमपि समापद्ये मया सार्द्धमित्युक्ते [१५५]। देवनागयक्षगन्धर्वकिन्नरमहोरगप्रेतपिशाचकुम्भाण्डकटपूतनप्रतियोकि(?गि)तायाम् [१५६]। स्थूलकृत्त्वं पांसुपिशाचकस्य [१५७]। अनित्यादिसंज्ञान्याकरणाप्रमाणारूप्यफलाभिज्ञादिकमुत्तरो धर्मः [१५८]। स्थूलकृत्त्वं स्वलक्षणग्राहकस्य क्लेशविस्कम्भिनः शमथः निमित्तस्य [१५९]। नानुक्तिस्तद्धर्मस्य : तद्धर्मकस्योक्तेः [१६०]। परावदेशत्वमस्त्यसावित्युपसन्धाने स्वस्य [१६१]। नोपसंधाने [१६२]। नासमन्वाहृत्य व्याकुर्यात् [१६३]।

॥ प्रलापे विभङ्गः ॥

## (ख) पृच्छागतम् ।

नाख्यापनमुत्तरस्य प्राक्षपरिहानिप्रतिपादनम् [१६४]। उत्तरख्यापनच्छन्देन सनामार्थाभिधाने स्थूलम् [१६५]। विपर्ययस्य [१६६]। संहृषनेन च न भूतोत्तरत्वेऽस्य जातत्वम् [१६७]।

॥ प्रलापे पृच्छागतम् ॥

## (ग) विनीतकानि ।

स्थूलमन्तर्तदन्तोग्र(?)न्वार्हसि चीवरादिकं ब्राह्मणो वाहितपापधर्मा पञ्चतस्येन्द्रियाणि सुदान्तगुप्तरक्षितभावितानीत्युक्तस्य तूष्णीम्भावेनाधिवासने [१६८]। यदि भदन्तोऽर्हन् पिण्डपातं मे गृहाण प्रविश गृहमासने निषीद हस्तोदकं गृहाण भोजनं प्रतिगृहाण तर्पिकं भुंक्ष्वानुमोदस्व निष्क्रामेति तद्वत्संपादने [१६९]।

॥ प्रलापे विनीतकानि ॥

॥ समाप्त उत्तरप्रलापः ॥ ४ ॥

# §२, संघावशेषः ।

## (१) शुक्रमोचनम् ।

## (क) विभङ्गगतम् ।

अभावयत् स्वप्नः [१७०]। अकृतत्वं सत्फलस्य [१७१]। मोचने [१७२]। तच्छन्देन [१७३]। स्वशुक्रस्य [१७४]। आद्ये [१७५]। अविशेषः सुखबीजभैषज्यमीमांसार्थितानाम् [१७६]। स्पर्शनेन [१७७]। व्यापृत्या [१७८]। अङ्गजातस्य [१७९]। बाह्येनापि सत्त्वसंख्येन स्थितेन तदाहारे [१८०]। विनाप्यभिनिग्रहाभिनिपीडनाभ्याम् [१८१]। विनिर्भोगव्याप(?)कव्यवसर्गसुखप्रत्यनुभवैश्च [१८२]। अनाडीगतस्य [१८३]। अकृतत्वं विधानस्थायां प्रतिविरतो समाप्तेः [१८४]। हासकृत्त्वं नृत्तस्य(नृत्ती?)नृत्तयोः [१८५]। आकाशे कटिचालनस्य [१८६]। प्रदेशान्तरस्पृष्टेः [१८७]।

प्रतिस्रोतो धारणकस्य [१८८]। प्रतिवातश्च [१८९]। अभिनिर्मोगसुखप्रत्यनुभावोपसंपप(स्पर्श?)तः [१९०]। नाडीगतस्य [१९१]। न मापनार्थत[ा]यां रक्तचित्ततायां स्पृष्टिप्रयोगः [१९२]। दर्शने दुष्कृतम् [१९३]। धारणे चानुस्रोतोत्रातम् [१९४]। अनापत्ति[ः] सहसा अतदर्थप्रवृत्तावूरुवस्त्रपरसंस्पर्शकण्डूयनैः [१९५]। अस्पृश्यानुभूतेः [१९६]। स्मरणतस्तस्यापि [१९७]।

॥ मोचने विभङ्गगतम् ॥

(ख) पृच्छागतम्।

च्यविष्यमाणच्युते[ः] समनन्तरं विद्ध(?)नाडीगते [१९८]। नारम्भमात्रेण प्रयोगत्वम् [१९९]। तद्वत्त्वं निष्प्रयोगायां शुक्रौ स्वादने [२००]। न पीडमर्दपरिमर्दनाश्चाङ्गजातस्य [२०१]। कर्मण्यस्याप्यपरिमार्गे भैषज्येन मोचनम् [२०२]। परकीय[ा]श्च [२०३]।

॥ मोचने पृच्छागतम् ॥

(ग) विनीतकानि।

विनीलकादौ विघटिति(?) अस्थिशङ्कुलकयोः शिरःकर्णनास[ा]सु ग्रि(?ग्री)वान्तपार्श्वपृष्ठक्रोडवलिषु वालान्तरे हस्तांसबाहुषु बाह्वन्तरे कट्यूरुपादजंघासु जंघान्तरे च मोचने मौलम् [२०४]। स्थूलकोचवनमर्त(?ता)चिलिमिनिकबिम्बोपधानकमंचपीठवृशिपीठान्तरे पटघटिकाघटमिलकरकिनीकठिल्लकशिलालेपलेपान्तरागेटमांसपेशिषु [२०५]। व्रणपीडने [२०६]। निपीडने स्वीकृतस्यारम्भे [२०७]। अङ्गुष्ठस्यात्र प्रक्षिप्तौ [२०८]। उपसंक्रामतो शुक्रौ [२०९]। संक्रामतश्च स्थानात् स्थानम् [२१०]। अयोनिशश्च मनसि कुर्वतः [२११]। अंगजातं धारयतः [२१२]। अनापत्तिः वस्तिसंघर्षणात् [२१३]। परिष्वङ्गेनापीदानीं पुराणद्वितीयया [२१४]। पादजंघाबाहूर्ध्वंगुल्यादौ च स्त्रिय[ः] ग्रहणे [२१५]।

॥ मोचने विनीतकानि ॥

॥ मोचनं समाप्तम् ॥ १ ॥

(२) कायसंसर्गः।

(क) विभङ्गगतः।

स्त्रिया कर्तृत्वम् [२१६]। [illegible] [२१७]। रहसि निषद्यास्थानयोः [२१८]। समोजनतायाञ्च [२१९]। सह शय्यायां अप्यन्यविज्ञपुरुषया सार्द्धमूढौ [२२०]। उत्तरत्र द्वये [२२१]। देशेने(?)गृहिण्याः पुंसोः सान्निध्यविज्ञस्य [२२२]। सान्निध्येऽप्यकल्पिकायाम् [२२३]। दुष्कृतस्य [२२४]। न्यूनत्वं द्वीपान्तरजविकारभाजः [२२५]। चोद्धृत्वमस्य [२२६]। व्यर्थं दार्विल्ये(?)परं लिङ्गम् [२२७]। अवताकार(रक?)मत्र [२२८]।

या(?)ज्ञाते सुभ[ा]पितदुर्भापितयोरर्थस्य त्रयोऽन्त्येऽन्यत्र प्रतिसेवने मिथुनस्येति प्रतिबलत्वे मौलस्य [209] । अनन्तरस्यान्यत्र [210] । तद्वत्पण्डिका पण्डको निर्मिता च [211] । इह च त्रये पुरुष[ाः] [212] । तत्र सुखासुभाननच्छन्दे चेत् संरागसंप्रयुक्तेनेति [213] । गात्रसंसर्गस्वीकारे [214] । तद्वच्चमत्र वेयोः [215] । तत्प्रतिबद्धस्य च चीवरस्य [216] । अविशिष्टत्वमामर्पयामंशालम्भग्रहणाकर्षपरिकर्षोल्लिंगानलिङ्गाभिनिपीडानाम् [217] । सेव्यकृत्त्वस्य च [218] । अनन्तरं चीवरान्तरये [219] । अनन्यपरं दुष्कृतहासस्य [220] । न भिक्षुणीं स्पृशेत् [221] । न स्त्रियम् [222] । स्पृशेदंभस्यात्तामुत्तारणाय बाहौ केशेषु वा मातृदुहितृभगिनीसंज्ञामुपस्थाप्य [223] । वालुकास्थाने चेटालामार्थमवाङ्मुखावस्थापनम् [224] । पीठवद् रक्षणम् [225] । भक्तायावलोक्य गोपालपशुपालकानयनम् [226] । प्रत्यवेक्षणं जीवति न वेति पौनःपुन्येन [227] । निर्दोषोऽनुकम्पया शुद्धचित्तस्य स्त्रीपरिष्वङ्गः [228] ।

॥ कायसंसर्गे विभंग. ॥

(ख) पृच्छागत ।

श्लक्ष्णोष्णमृदुकाभिप्रायत्वे स्थूलम् [229] । अनापत्तिरनुकम्पया दुःखात् मोचने [230] । मातृदुहितृभगिनीषु तत्संज्ञाने [231] । पूर्वसंस्तुतायां संमोदने [232] ।

॥ कायसंसर्गे पृच्छा ॥

(ग) विनीतकानि ।

भिक्षापांसुलेड्डुकादेः स्त्रीन्द्रिये प्रक्षिप्तौ स्थूलम् [233] । दुष्कृतं पादांशादिना स्त्रीघट्टने [234] । तदासनस्य च [235] । पिच्छिलितपतितस्त्र्युत्थापने [236] । अनापत्ति[ः] स्त्रियाऽन्यैतत्त्रयकरणे ग्रहणे च [237] । आलिंगने माता [238] । दुहितोत्सङ्गे निपत्तौ (?) [239] । स्त्रिया प्रस्तरस्योपरिपाते [240] ।

॥ कायसंसर्गे विनीतकानि ॥

॥ कायसंसर्गः [समाप्तः] ॥ २ ॥

(३) मैथुनाभाषणम् ।

(क) विभङ्गगतम् ।

मैथुनोक्तौ [241] । याद्य(?)र्थेन [242] । यत्र चोद्धुं भव्यता स विज्ञपनेऽन्तः [243] । न तद्गतार्थोक्तिऽप्रयोगत्वम् [244] । अविशिष्टत्वं वर्णावर्णयाच्ञोपयाच्ञाप्रश्नापरिपृच्छाख्यानाशंसाक्रोशप्रत्यनुभाषणप्रतिपदाम् [245] । अनापत्तिरर्थान्तराभिप्रायेण जनपदनिरुक्तिवशात् [246] । सदृशार्थत्वस्य या नाम्नः [247] ।

॥ मैथुनाभाषणे विभङ्ग ॥

(ख) पृच्छागतम् ।

स्थूलं छेकांशी(? काञ्ची)तिवादे पापिकासीति छेकं ते पापकं वा व्रणमुखमिति संविभागं कुर्विति मां संविभजस्वेति मया सार्द्धं स्वपिहि समागमं वा कुर्विति [१६८] ।

॥ मैथुनाभाषणे पृच्छा ॥

(ग) विनीतकानि ।

तथा विकुर्वाणधर्मिकाभाषणे [१६९] । यवान्(गुं ?) देहि देहि भगिनि मह्यं यत्ते भगिनि पश्यामि तद् देहि यत् ते भगिनि पुरतस्तद् देहि यत् ते भगिनि मनआपं तद् देहि प्रियं ते देयमित्यहमुक्त्वा किन्ते प्रियमित्युक्ते त्वं मे भगिनि प्रिया [१७०] । देहि मे भगिनि पानीयं खाद्यकं यवागुं भोजनं त्वमेवैतदित्युक्तिषु [१७१] । गर्दभास्त एतत् कुर्वन्त(?न्तु) [१७२] । चारिकां भगिनि चरस्युछापयमाना पुरुषान् पिण्डपातम् [१७३] । अलातमस्मिन् प्रक्षिपेति च [१७४] । प्रकृत्या च दौष्ठुल्यभाषिणो दुष्ठुलया भाषणे [१७५] ।

॥ मैथुनाभाषणे विनीतकानि ॥

॥ मैथुनाभाषणं [ समाप्तम् ] ॥ ३ ॥

(४) सांचरित्रम् ।

(क) निभङ्गगतम् ।

मैथुनेनात्मनः परिचरणस्य वर्णने [१७६] । तद्वर्णितानुमोदनार्थं वचनम् [१७७] । तदेव प्रत्युच्चारणम् [१७८] । तेन मैथुनेन वानुपसंधाने प्रश्लोगतनम् [१७९] । उभाभ्यां तस्य [१८०] । परिचर्यासंवर्णनम् [१८१] । संयोगे [१८२] । अन्यस्य [१८३] । अन्येन [१८४] । तदर्थम् [१८५] । अनुपनतोपनतैः प्रमत्तैः गृहीतदौतेयस्य संप्रयोज्यतो निवेदि भवतस्तत्रेतरतदुक्ते पूर्वत्र प्रवेदने [१८६] । कृतत्वं श्रुतत्वेऽप्यमध्यवृत्तेः [१८७] । पृथक्त्वमेषां करणीयतायाम् [१८८] । नाकर्तृत्वेऽन्त्यस्य नूत्वेन (?) प्रयोगत्वम् [१८९] । न फले क्या(?स्या)त् प्रतिकर्तृसमासे व्यापारस्य लोपः [१९०] । स्वत्वमत्र दूतस्य [१९१] । संप्रयोज्यत्वं तत्प्रभोः [१९२] । ···पत् (?)त्वमन्यस्य । [१९३] । वाक्त्वं लिपिहस्तमुद्रोद्देशं संकेते निमित्तानाम् [१९४] । अनुपनतिवेश्यात्वम् [१९५] । प्रवत(?)त्वं चासत्वेन प्राक् चतुष्ट[य]ात् [१९६] । अष्टत्वं फलहितत्वे [१९७] । तद्वशा चेदमार्यानुश्रावितत्वे आणिवत्त्वं तदन्तरसमन्तरकलिहितत्वतिलिन्विलिकाच्छिन्नद्विनिसर(?सं)करापरित्वाचारप्रतिनिःसृष्टत्वाभार्यानुश्रावितत्वघण्टा च घुष्टत्वानां दुष्कृतकृत्त्वं त्रयस्यास्यामार्यस्य [१९८] । कस्मादयं न प्रतितिष्ठतीयं न गच्छति श्वशुरगृहान्न नीयत इति चोक्तीनाम् [१९९] ।

॥ सांचरित्रे विभङ्गः ॥

(ख) पृच्छागतम् ।

स्थूलं गर्धासन्निपतासेवनक्रीडोपनतात्मनां सांचरित्रे [५००] । व्यपदेशे प्रतीष्टतायाम् [५०१] । कलि(?ल)हेन हारणे [५०२] । माऽऽर्यामुका(कां) स्त्रियं क्रीणीहीत्युक्तौ [५०३] । दुष्कृतं स्त्रियमिति [५०४] । काचिल्लभे[ते ?]ति च [५०५] ।

॥ सांचरित्रे पृच्छा ॥

(ग) विनीतकानि ।

स्थूलं दत्तो तामसमाधानेन [५०६] । धर्मोपाधिं पुरस्कृत्य शब्दनेन [५०७] । अन्यार्थमसंहित[ा]श्च [५०८] । नादुष्टताया[ः] सत्त्वस्यान्यत्रेत्यनाक्षिप्तत्वम् [५०९] ।

॥ सांचरित्रे विनीतकानि ॥

॥ [समाप्तं] सांचरित्रम् ॥ ४ ॥

ॐ

(५) कुटिकाविहारगत ।

(क) विभङ्गगत ।

निर्दोषमयात्र ईर्यापथचतुष्कस्य [५१०] । अतन्त्रत्वं नियुक्तानियुक्तत्वयोः [५११] । स्वत्वं नियुक्तस्य [५१२] । प्रतीष्टा वो यथोक्तकारे कायेन वा वाचा वा [५१३] । एकत्वं कृतेः [५१४] । अकर्तृत्वमङ्गानां भेदस्य [५१५] । याचितेऽनुज्ञाते वा तेन तद्विधेनाशुद्धे [५१६] । वस्तुन्यदेशिते आव[ा]सस्य कारणान्ते [५१७] । अनन्तरेऽप्येतदयाचितत्वम् [५१८] । एकार्थमिति प्रमाणस्य [५१९] । अकल्पिता सारम्भत्वमपराक्रमतेत्यशुद्धिः [५२०] । क्षुद्रजन्त्वाशयवत्वं राजकुलतीर्थकावसथसन्नि[ः]सृतत्वाच्छ्वभ्रवृक्षत्वमवाग्व्यामान्तानन्तर्यतो बहिर्नदीप्राग्भारोदयानावष्टव्यत्वमिति यथासंख्यमेतानि [५२१] । ग्राम[ा]णिको हस्तोऽध्यर्धः सुगतवितस्तिः [५२२] । तद्द्वादशकसप्तको (?) प्रमाणामम(?)न्तरम् [५२३] । लब्धदेशनत्वं संघतो देशितव्यम् [५२४] । नाशुद्धस्य याचेत [५२५] । स्वप्रत्ययेन वा गच्छेयु[ः] नियुक्तानां वा भिक्षूणाम् [५२६] । संस्तरेऽप्येतत् [५२७] । अनापत्तिः कृतलाभ-परिभोगयोः [५२८] । पुराणाभिसंस्करणे च [५२९] ।

॥ कुटिकाविहारसंघावशेषे विभंग- ॥

(ख) पृच्छागत ।

प्रयोगत्वमारम्भस्य [५३०] । तद्वदच्छन्नकारणेऽन्तः [५३१] । अनेकार्थं अनि[ः]सृष्टे पौद्गलिकेन [५३२] । विप्रकृतस्य च [५३३] । दुष्कृतमनिर्वाहे याचनादूर्ध्व(?र्ध्वं)म् [५३४] ।

॥ कुटिकाविहारसंघावशेषगता पृच्छा ॥ ५ ॥

ॐ

( ६ ) अमूलकसंघावशेष ।

पाराजयिकाध्याचरणस्य भिक्षोर्ध्वंस्तस्याप्यनङ्गमत्र पक्षतः सत्यं मृषावादेन कस्यचिद् विज्ञप्तौ । व्या(?या)चनच्छन्देन । न वं मूलमन्तरम् । असत्त्वं प्रमुपितस्य प्रकारणमृषावादित्वेऽर्थनत्वम् ।

॥ अमूलकसंघावशेषः ॥ ६ ॥

( ७ ) अन्यथाभागीयानुध्वंसने ।

वाच्यान्तरप्रतिष्ठेन वाक्येन मृषा ।

॥ अन्यथाभागीयानुध्वंसनसंघावशेषः ॥ ७ ॥

( ८ ) अमूलक्लेश ।

स्थूलमसेवनेनानुध्वंसने । अनुग्रहे च नाम्नः । तथा न तस्यान्तिके दुष्टचित्तरुधिरोत्पादने संघभेदे च संस्रवने सन्धाय भाषितमित्यपि दुष्कृतम् ।

॥ अमूलक्लेशपृच्छा ॥ ८ ॥

( ९ ) संघभेदे ।

परपर्षद्पकृष्टौ स्थूलम् । निवारणप्रतिनि[ः]सर्गानुष्ठानरूपानुगतिः । निवारणवर्त्मं ज्ञप्तेः एकक्षणत्वं वाक्यस्य । पृथक्कृत्यमावृत्तेः । न निगमनस्य । प्रयोगत्वं प्रवृत्तेः । तस्याः कृतप्रवासनीयचोदनसा-रणस्य । अनाज्ञाप्यत्वमस्य । नेषु न नाज्ञपयेयुर्मैथ(?)केन कर्मणा च । तदन्ते प्रतिनि[ः]सर्गे । पराक्रान्तित्वस्य । भेदे । संघस्य ।

॥ संघभेदसंघावशेषः ॥ ९ ॥

( १० ) अनुवर्तने ।

तस्याहाय्यप्रतिपत्तृतायाः ।

॥ अनुवर्तनसंघावशेषः ॥ १० ॥

( ११ ) कुलदूषणे ।

स्वप्रवासनकर्तरि संघे मिथ्याशा येनैषास्मान् प्रव्रचिरिति वक्तृत्वस्य मृषा ।

॥ कुलदूषणसंघावशेषः ॥ ११ ॥

( १२ ) दौर्वचस्ये ।

चोदितत्वे भिक्षुणाधिशीलमवचनीयत्वस्यात्र भिक्षुरात्मनः कृते ।

॥ दौर्वचस्यसंघावशेषः ॥ १२ ॥

॥ संघावशेषः समाप्तः ॥

## § ३, नैस्सर्गिकः ।

### (१) मारणे ।

नापूर्वेऽहोरात्रेण न[ा]स्त्यस्य सत्त्वम् [५५९] । प्रयोगपात्रत्वपासे [५६०] । प्रथमारुणादिरेपोऽस्य [५६१] । सूर्योद्गमने कर्म दृष्ट(?) ये [५६२] । सत्त्वं नै[ः]सर्गिके संज्ञानतः प्राधान्येन [५६३] । अपेतत्वमस्य निर्यातितत्वे [५६४] । तत्त्वं प्रव्रज्यापेक्षार्थतायां नियमनस्य [५६५] । चीवराद् विकल्पनायाश्च [५६६] । ध्वंसोऽत्रानुवृत्तत्वस्य [५६७] । अंसे(?शे) च प्रकृते [५६८] । सतोऽस्यान्यत्रापि तद्वस्तुनि जातत्वम् [५६९] । स जातो(?) साप्ताहिके [५७०] । नै[ः]सर्गिकत्वस्य तदापत्तिसत्तायां स्वीकृते परिस्कारमात्रे [५७१] । नैतदूनत्वे खण्डस्य [५७२] । सांघिकस्य च [५७३] । निस्स्वमत्र तन्त्रम् [५७४] । नेदं त्रयमास्तीर्णकठिनस्य [५७५] । सद्भावे सत्त्वस्यानुवृत्तस्य दशरात्रम् [५७६] । पराहादौ [५७७] । वाससि [५७८] । त्रिमण्डलस(?ख्)छादिपर्यन्तप्रमाणे [५७९] । असम्बन्धाधिष्ठानेन [५८०] । सम्बन्धे च सानुवृत्तौ अन्यत्राधिष्ठिततद्भोतो(?गा)त् प्रभृत्यन्यत्र [५८१] ।

॥ मारणे नैस्सर्गिकः ॥ १ ॥

### (२) विप्रवासे ।

#### (क) विभागतः ।

निर्दोषो निःश(?प)दनेन विप्रवासः [५८२] । न प्रमील्य प्रत्यास्तरणं गच्छेन्न चेदन्यैव प्रतिप्राप्तिरिति संस्था [५८३] । वासे देवमभिप्रेत्य गतो कालसम्पत्तौ तत्र याचित्वैतत् [५८४] । असम्पत्तौ चतुर्गुण उत्तरासंगे बहुतरजागरणेन [५८५] । नानर्हे(?)संघाटीनिक्षिप्तेतवसेपक्षाशानि (?) निक्षिपेत् [५८६] । न दृष्टौ [५८७] । न नद्यन्तरे तद्वे[ग?]गन्तव्यस्य [५८८] । नानयोराशङ्कायाः [५८९] । भिक्षुकपकशटकत्वं सहितमायास्य वर्षतो देवस्य वर्षाशङ्किता वा जलान्तरितत्वं गन्तव्यस्येत्यस्याभावेनादवसंवृत्तिरनास्तीर्णकठिनः संघाटीं विना न क्वचिद् गच्छेत् [५९०] । अन्याधिष्ठानमुत्सृज्य प्रचीवरस्थानास्यसंभवे प्रतिविधिः [५९१] । दानमविप्रवाससंवृत्तेः संघाट्या गुरुकत्वे जीर्णे वाधिकयोः [५९२] । अधिष्ठितस्यालघ्वसंवृत्तेः कर्तृत्वम् [५९३] । सोपविचारात् तत्स्थानादन्यत्र स्थितस्यारुणोद्गतौ [५९४] । कृतमर्यादे मर्यादास्थानपर्यन्तः [५९५] । नैकत्वे परिगृहीतुरयान्तरमर्यादानां भेतृत्वम् [५९६] । अविभक्ततायां च घनतो दृष्टितश्च [५९७] । शाखोपशाखानामसंसंगे पृथक् स्थानत्वं साधारण्यमूलस्य [५९८] । मूलामूलादेश [५९९] । संसक्तशाखाविटपवृक्षाणामेकस्थानत्वम् [६००] । चलक इव तत्राधोभागस्य प्रवेशः [६०१] । नौ-शकटयोश्च [६०२] । निर्मर्यादे व्याप्यङ्ग(म?)पर्यन्तः [६०३] ।

उपविचारव्यामस्सामन्तकेन [९.०४] । कुड्यपरिक्षिप्ते ग्रामे यावत् षड्गवयुक्तेन वंशशकटेन स्फुरणमध्वना वा कुक्कुटस्योत्पात्य निलयने वाटपरिक्षिप्तेऽजेडकरजासंप्रकृतिहीमवत्पुरुषप्रविचारभूम्यध्वना वा [९.०५] । परिखापरिक्षिप्ते द्वादशपदिकया निःश्रयण्या[ः]च्छोरितसंकारस्थूललोष्टाध्वनो वा [९.०६] । तत्स्थाने त्रिकरणीयपरिसर्पणातिना मन रजोभिश्च यावत्तत्द्गतस्य संभावनम् [९.०७] । निर्मर्यादेऽध्वन्यभिव्रगतेर्मनुष्यस्यैकान्न(स्यैकोन?)पञ्चाशद् व्यामाः [९.०८] । न सीमान्तरं पृथक्कृत्वं क्रोशान्तान्मध्यतः परस्य [९.०९] ।

॥ विप्रवासनैस्सर्गिके विभङ्गः ॥

(क) क्षुद्रकगतः ( १ )

न पाखण्डतोपगतावधिष्ठानस्य [९.१०] । नारूढिनैस्सर्गिके [९.११] । सांघिके [९.१२] । भवत्यतो विप्रवासः [९.१३] । नान्याधिष्ठानादन्यस्थानत्वहानिः [९.१४] । नान्येदं धर्मकयोः द्दष्टितश्चेदनाक्षेपः [९.१५] । न साधारणेज्वार(?द्वार)कोष्ठकस्य [९.१६] । न धनत इति पितृपुत्रयोः [९.१७] । विवर्जिताप्येतत् [९.१८] । सभोजनत्वे च [९.१९] । नोपविचारत्वं ग्रामेऽस्याभवतो विहारस्य [९.२०] ।

॥ विप्रवासनैस्सर्गिकः ॥ २ ॥

( ३ ) मासिके ।

(क) विभङ्गतः ।

पूर्णवदसत्यां पूरकप्रत्याशा(सं?)शायां न्यूनं मासमसामन्तकात् [९.२१] । स्वे चाधिष्ठानिकस्य [९.२२] । अन्यत्राप्यत्रिंशद्राहा(?त्रा)तिक्रान्ते [९.२३] । अपूरकत्वविजातीयस्य वर्णादितः [९.२४] । सर्ववर्णत्वं शौक्ल्ये [९.२५] । तद्ग्रणाहादो ए(?)प्रथितत्वं संपत्तौ तस्य [९.२६] । पुटद्वयमहतात् संघाटीपर्यन्तः [९.२७] । निपदनस्य च [९.२८] । एक उत्तरासंगान्तर्वासनो(नः) [९.२९] । द्विगुणमृतुहतात् [९.३०] । अनियम[ः] पांसुमयेषु [९.३१] । दद्याल्लू(?)हत्वे परिचितायां वाधिकानि यावदर्थम् [९.३२] । अदेयत्वमाधिकस्य [९.३३] । नैस्सर्गिककृत्त्वञ्च [९.३४] । न न्याय्यमुत्पादयेदत्रैव परिकर्म कृत्वारोपयिष्य इत्यनुसम्पाद्य चित्तम् [९.३५] । यथातथोत्पादितस्य प्राक्समायोगान्नैस्सर्गिककृत्त्वम् [९.३६] । खण्डसंघाट्यां नव प्रभृत्या पञ्चविंशतेर्युग्मवर्जम् [९.३७] । अतः(?)यं कन्या [९.३८] । प्रथम एषां त्रिकैः द्वितृतीयमण्डलकत्वम् [९.३९] । अर्धचतुर्थमण्डलकं द्वितीये [९.४०] । तृतीये पञ्चममण्डलकत्वम् [९.४१] । त्रिपञ्चकानि स्वहस्तैः ज्येष्ठान्याधिष्ठानिकानि [९.४२] । कनिष्ठान्युभयतोऽर्द्धहस्तमुत्सृज्य [९.४३] । अनन्तरं मध्यानां प्रमाणम् [९.४४] । अन्तर्वासिसो द्विपञ्चकमपि द्विचतुष्कञ्च [९.४५] । आत्रिमण्डल-

च्छादितत्वेऽपि [६४६] । कायसमांसद्वयं हस्तेऽर्थः [६४७] । अकारयति कुसूलक-करणम् [६४८] ।

॥ मासिकनैस्सर्गिकविभङ्गः ॥

(ख) पृच्छागत. ।

दुष्कृतकृत्वं न्यूनवत्व(?द)न्तरे [६४९] । अप्रत्याशत्वमच्छादनेऽर्द्धमण्डलस्य [६५०] । अकल्पिके च [६५१] । निरधिष्ठ[ि]तानाञ्च शुचयोचपरिश्रावप्रत्यास्तरणचिलिमिलिकादीनां परिस्कारचीवराणाम् [६५२] ।

॥ मासिकेपृच्छा ॥

॥ मासिकनैस्सर्गिकः ॥ ३ ॥

(४) धात्रने ।

(क) विभंगगतः ।

प्रतिगुप्तेरन्तर्वर्त्योस्थानम् [६५३] । अनुपेक्षणमत्र भिक्षुणीभिः [६५४] । पिण्डकस्यास्मै दानम् [६५५] । ज्ञातिरासप्तमाभ्यां पितृभ्यामन्यतरेणाप्येकपूर्वजः [६५६] । संज्ञानस्य कर्तृत्वं प्राधान्येन अन्यदेतत् [६५७] । भिक्षुणीत्वतदज्ञातित्वयोः [६५८] । उत्तरसिंश्च [६५९] । अधिष्ठितस्वपुराणधावनार्हचीवरनिषदनांकस्य निर्धावनरञ्जनाकोटनेषु विज्ञप्त्या [६६०] । प्रदेशस्यापि कृतौ कर्मणः कृतत्वम् [६६१] । कृतत्वे कारितत्वम् [६६२] । आफलपर्यन्तादेकत्वम् [६६३] । पर्वभूतत्वे फलानामैक्ष्यम् [६६४] । संज्ञानप्रधानतायां यथार्थे मौलम् [६६५] । उपमूलत्वमयथार्थत्वे संज्ञानाद् विमतिः [६६६] । सांघिकं क्रियाकारमनुरक्षेत् [६६७] । अनिस्सरणमत्रागन्तुकत्वं सदसत्स्वरूपनिर्ज्ञानार्थमस्य तेन प्रश्नः [६६८] । अनतिनमय्य (?) [६६९] । बुद्धोक्तः सांघिकाद् विचालः [६७०] । गृहीयान्निःसृज्यमानमतिरेकं पात्रचीवरशिक्यसरितकायबन्धनं संघ उपनिक्षेपाय [६७१] । तथोपनिक्षेप[ः] तस्य यथेष्टं तद्विकल्पैरादानम् [६७२] ।

॥ धावननैस्सर्गिके विभङ्गः ॥

(ख) पृच्छागतम् ।

नोच्चारप्रस्रावस्यन्दनिकाकर्दमादिनासितधावनेऽस्त्यपहासः [६७३] । दुष्कृतं चिलिमिनिकागृहचोडोपधानकविकल्पितनिःसृष्टसांघिकानाम् [६७४] ।

॥ धावननैसर्गिकपृच्छा ॥

॥ [इति] धावननैस्सर्गिकः ॥ ४ ॥

(५) प्रतिग्रहे ।

(क) विभंगगत ।

प्रतिगृह्णीयाद् भिक्षुणी महार्हं वासः परिवर्हणाय कुर्याद् भिक्षुण्या सार्द्धं परिवर्त्तकम् [६७५] । तुल्येन तत्तुष्टिकृता वा प्रतिग्रहे [६७६] । विज्ञप्त्या चीर-

रस्य [१७७] । अनापत्तिः पटकप्रदाने संघाय सौभापणिकत्वं [१७८] । उपसंपाद्यमा-
नम्रुपितयोः [१७९] । चित्रश्रद्ध[ा]मुद्धाप्य पुरतः [१८०] । स्थापयित्व[ा] निरपेक्षणं
प्रक्रमणे [१८१] ।

॥ प्रतिग्रहनैस्सर्गिकविभङ्गः ॥

(ख) पृच्छागत ।

हस्तिभूतत्वे लब्धदाने [१८२] । दर्शनोपविचारगततास्यादिः प्रयोगत्वमसन्नि-
हितप्रतिष्ठे [१८३] । वैशद्यमयाग्रानसत्त्वं च पटप्रदानादौ सत्रम् [१८४] । अनापत्ति-
स्तावत् कालिकचित्तेन विसृष्टस्य मूल्यादाने [१८५] ।

॥ प्रतिग्रहनैस्सर्गिकपृच्छा ॥

॥ [इति] प्रतिग्रहनैस्सर्गिकः ॥ ५ ॥

(६) याच्ञानैस्सर्गिक ।

मनुष्यगतिगतो गृहीभूतः प्राणपञ्चातिरापत्तिकृत् [१८६] । उत्तरसिंश्च
त्रये [१८७] । अनाच्छिन्ननष्टदग्धहृतोऽर्द्धचीवरस्य [१८८] । विज्ञाने दुष्कृतस्य [१८९] ।
मौलस्य लब्धौ चीवरस्य [१९०] । अनूनस्य [१९१] । यद्विधस्यार्धवर्णसमतो
विज्ञप्तिः [१९२] । अनापत्तिरन्यस्य [१९३] । न तुकदशिकपोश्च विज्ञ[ा]पने [१९४] ।
न्यूनत्वमोतो(?)त्तानस्य च [१९५] । तद्वत् तत्प्रकृतिः [१९६] ।

॥ [इति] याच्ञानैस्सर्गिकः ॥ ६ ॥

(७) विज्ञापनार्ह ।

सर्वस्याभावेऽधिष्ठेयस्य विज्ञपनार्हत्वम् [१९७] । अस्थापत्यता [१९८] । परं गृहिणो
द्वादशहस्तकः परकोत्तरमन्तरं ससाद्धिकशाकटः [१९९] । भिक्षोः ज्येष्ठे यथोक्तपुटे
संघाटीनिवसने [२००] । युग्मस्य विज्ञ[ा]प्यत्वम् [२०१] । अन्यतरस्य [२०२] । अति-
रिक्तस्यातः प्रमाणादविज्ञप्यत्वम् [२०३] । पूर्वकस्य च पूर्वलब्धौ उत्तरलब्धाव-
धिकस्य देयत्वम् [२०४] । उत्तरलाभ अति(धि ?)कस्य देयत्वम् [२०५] । विज्ञ-
प्तावविज्ञप्तस्य दुष्कृतम् [२०६] । विज्ञप्तावविज्ञप्यस्य दुष्कृतम् [२०७] । लब्धौ
मूलम् [२०८] । अदाने च देयस्य [२०९] ।

॥ [इति] विज्ञपनार्हनैस्सर्गिकः ॥ ७ ॥

(८) सकल्पित ।

संकल्पितमप्रचारितस्य ज्ञातं तुल्यमसंकल्पितेन [२१०] । तदेवान्यत् [२११] ।

॥ [इति] संकल्पितमार्गनैस्सर्गिकः ॥ ८ ॥

(९) प्रत्येक ।

वैशद्य[म]पि दातुः [२१२] । एकत्वं लब्धेः प्रयोगैक्ये [२१३] ।

॥ [इति] प्रत्येकनैस्सर्गिकः ॥ ९ ॥

( १० ) प्रेषित ।

प्रेषितमकल्पिकं, चीवरमूल्यं प्रतिक्षिप्य परिप्रप्ण(?श्न)पूर्वकमुपदिष्टं वैयापृ(?वृ)त्यकरणमादिष्टं दूतेनोक्तो वृत्तान्तत्वाख्यापूर्वकश्चोदयेत्[७१४] । नाशक्त(?)-यत्तायां संप्रधारणे चोदितत्त्वम्[७१५] । असम्पत्तौ द्वितीयमपि[७१६] । तृतीयञ्च[७१७] । तत्र आहृतीमसुद्देशे तिष्ठेत्[७१८] । असम्पत्तौ दातारं श्रावयेत्[७१९] । वृत्तायामेवं प्रतिनिःश्रि(?सृ)ष्टौ प्रयच्छत उक्तप्रतिनिःसर्गादभ्युपेतत्वात्[७२०] । चित्तग्रहणानुष्ठानात् प्रतिगृह्णीयात्[७२१] । परंचोदनेन स्थानेऽभ्युपेते वा[७२२] । गृहीतौ[७२३] । मनुष्यद्वे(?)त्रयस्य गृहीतत्वे च[७२४] । अनुक्तौ दुष्कृतम्[७२५] । अप्रतिक्षेपे[७२६] । अपृष्टोपदेशे च[७२७] । नैराश्ये चाश्रावणे[७२८] ।

॥ [ इति ] प्रेषितनैःसर्गिकः ॥ १० ॥

( ११ ) कौशेय ।

( क ) विभङ्गगत ।

धारयेत् संस्तरम्[७२९] । कृतिकारणयोः[७३०] । को(कौ)शेयस्य[७३१] । संस्तीर्णतादि संस्तरे[७३२] । कृतिनिदानस्य[७३३] । अनापत्तिः कृतलाभे भोगाभिसंस्करणेषु[७३४] ।

॥ [ इति ] कौशेयनैःसर्गिके विभंगः ॥

( ख ) पृच्छागत ।

न्यूनत्वन्यूनमिश्रत्वे[७३५] । विनष्टतायाञ्च द्रव्यस्य[७३६] ।

॥ [ इति ] कौशेयनैःसर्गिके पृच्छा ॥ ११ ॥

( १२ ) शुद्धकाले ।

शुद्धकालकैडकरोम्णाम्[७३७] । जात्या[७३८] । तथा नीलकर्न(?र्ण)मकर्कचश(?)कानाम्[७३९] ।

॥ [ इति ] शुद्धकालनैःसर्गिकः ॥ १२ ॥

( १३ ) द्विभाग ।

अतिरिक्तत्वेऽर्द्धस्य तेषाम्[७४०] । समांशत्वमितरत्रावदातगोचरकानाम्[७४१] । पार्श्वपृष्ठग्रीवजं पूर्वम्[७४२] । शिरपादोदरजमुत्तरम्[७४३] ।

॥ [ इति ] द्विभागनैःसर्गिकः ॥ १३ ॥

( १४ ) षड्वर्ष ।

दैर्घ्यविस्तारयोरतिमात्रत्वे छेदनम्[७४४] । वर्धनं ह्रस्वसंवृतत्वयोः[७४५] । छेदे संबन्धनम्[७४६] । प्रतिवायो भेदे दौर्बल्ययोः[७४७] । दुष्प्रतिसंस्करत्वे दानम्[७४८] । अलब्धसम्मृतेः सत्यन्यत्र स्वकमत्यक्ते यानतिक्रान्ते[७४९] ।

पड्वर्षसंगतौ कृततायां संस्तरस्य । सत्त्वचदारम्भे विप्रकृत्तम् । नान्तर्गतौ प्रयोगस्यानापत्तिकृत्त्वम् । पृथक्त्वं प्रव्रजा(?ज्या)न्तरस्य ।

॥ [इति] पड्वर्षनैःसार्गिकः ॥ १४ ॥

(१५) वितस्ति ।

अदत्तपुराणनिषदनसुगतविद्(?त)स्तिनवनिषदनस्य परिभोगे । संचेतव् (?) । एतावतापि । शक्यप्रतिसंस्कारेणापि । संदर्भसमुदागमने वा ।

॥ [इति] वितस्तिनैस्सर्गिकः ॥ १५ ॥

(१६) ऊर्णोढि ।

सति वोढर्यसति च योजनत्रयादूर्ध्वमेडकोर्णवहने । क्रोशोऽध्वनि गतेऽत्मा । प्रयोगस्यार्द्धं दुष्कृतमूर्द्धेरन्येन नभसा हरणे निर्मिते च । निर्दोषं खोलापूलालेप्यकायष्कुञ्चकलोढकनप्ररुचिकार्थं तन्मात्राणाम् । परमाण्वण्वलोहशश[ा]विगोरातायनच्छिद्ररजोलिक्षयूकयवाङ्गुलीनां पट्पूर्वमुत्तरम् । पद्(?) चतुरङ्गुलो हस्तोऽर्धचतुर्थः हस्तकः पुरुषश्च चतुर्हस्तकं धनुस्तत् शतपञ्चकं क्रोशः । तदन्तादि चरण्यस्य न कायभारं वहेत् । न पार्श्वपृष्ठकटिशिरोभिः । अनाशङ्क्यमसिद्धसाधारणत्वम् । नार्द्धमागादूर्ध्व(?र्ध्वं)मुत्पाटयेत् ।

॥ [इति] ऊर्णोढिनैस्सर्गिकः ॥ १६ ॥

(१७) ऊर्णपरिकर्म ।

पुराणचीवरस्य स्थाने एडकरोमाणि । विघटनमाकोटनस्य ।

॥ [इति] ऊर्णपरिकर्मनैस्सर्गिकः ॥ १७ ॥

(१८) जातरूपरजते ।

स्वीकृते रत्नस्य । गम्यतायां तत्पूरिः । स्वस्य चाकृतकल्पस्य । स्पृष्टो(?)स्पर्शेन च । यथाकथञ्चित् । पात्रिकताग्रस्य दुष्कृतम् । अनापत्तिरन्यस्य । त्रपुसञ्जशी(?सी)सलोहानां श्रामणेरयोश्च । दानपतेः स्वामित्वाधिमोक्षो वैय्य[ा]द(?वृ)त्यकरस्य स्वामित्वाधिमोक्षौ वैय्यावृत्याकरस्य । स्वामित्वाभ्युपगमनमधिष्ठानमितिकल्पाः । नाविधमानधर्मार्थप्रत्ययादन्यत्र रुद्दि(?रूढि)ः । न दूरत्वे स्वामिनो व्यक्तिः । कल्पते कारणमात्मार्थे भोजनस्य । तत्करे चार्प्पणाय कार्षापणग्रहणम् । पथ्यदनस्य चारना(?णा)त् । उपस्थापयेदभ्यर्थि(?र्थी) सूर्यकान्तम् । नैनमगुप्त[ः] स्थापयेत् । नादत्तादायिनोऽर्प(?र्प)येत् । फलमुत्पाद्य[ा]-

स्मै दद्यात् [७८९] । उदकार्थि(?र्थी) चन्द्रकान्तम् [७९०] । समानः पालनविधिः [७९१] । अनन्तः कृतत्वमुपस्कारानुज्ञाने रत्नस्वीक[ा]रस्य [७९२] । न रीति(रि?)ताम्रकंसदारुपात्रं स्वीकुर्यात् [७९३] । स्वीकृतस्यास्यान्यस्य वा परिभोगश्चेद् भैषज्यशरावकपरिभोगेण [७९४] । द्वयमाधिष्ठानिकमायसं मृन्म(?ण्म)यश्च [७९५] । मणिमुक्त[ा]वैदूर्यशंखशिलाप्रवालरजतजातरूपअ[ा]स्म(?श्म)गर्भमुसारगल्लोहितिकादक्षिणावर्तप्रभृति रत्नम् [७९६] । न्यूनत्वमयाचिके [७९७] । अनन्तरेऽपि [७९८] । छिन्नभिन्नखण्डदग्धाप्रचरितपूर्वानाहतिलक्षणप्रतिरूपकमेतत् [७९९] ।

॥ [ इति ] जातरूपरजतने.सर्गिकः ॥ १८ ॥

( १९ ) रूपिक॰ ।

लाभेऽस्यो(?)रापत्तिः [८००] । गृही[वृ?]त्वेऽपरस्याज्ञातित्वे मौली [८०१] । उत्पत्तौ वृद्धेः [८०२] । अनन्तरे च [८०३] । पणेन रत्नेन वा व्यवहारात् [८०४] । एकत्वं प्रयोगे [८०५] । प्रयुञ्जीत रत्नार्थम् [८०६] । आरामिकोपासकयोः सत्त्वे नियोगेत [८०७] । बन्धकं द्विगुणमादाय साक्षिसम्वत्सरमासदिवससंघस्थविरो(?)वारिक प्रहीतृधनलाभानारोप्य पत्रे [८०८] । ज्ञातवानेतदि[ति] तस्मै प्रवेदयेत् [८०९] ।

॥ [ इति ] रूपिकव्यवहारनैःसर्गिकः ॥ १९ ॥

( २० ) क्रयविक्रय॰ ।

अन्येन दद्यात् सांघिकं संघभक्तस्योपक्रीणते धान्यं मूल्येन [८१०] । तस्यैव चेत् सविशेषम् [८११] । क्रीणीयात् क्षये संघः [८१२] । नवश्च [८१३] । पुराणं विक्रीय निष्प्राणकं चेत् [८१४] । न मूल्यं कुर्यात् [८१५] । न गृहिव्यवहारेषु हस्तं प्रक्षिपेत् [८१६] । गृहिणा क्रायणम् [८१७] । असम्पत्तावात्रयाद्वा निश्चारणम् [८१८] । अकरणं परार्थेऽप्युत्सृज्य रत्नत्रयं पणापणयोः [८१९] । न बन्धकं कुर्यात् [८२०] । संघेन तदर्थं संघकार्मिकेणोधि(?)स्य दानम् [८२१] । नापृष्ट्वा वृद्धां(?वृद्धान्) संघार्थमुद्यच्छेत् [८२२] । यत्राभिलिखितता सम्पत्तिमस्यानुतिष्ठेत् [८२३] ।

॥ [ इति ] क्रयविक्रयने.सर्गिक. ॥ २० ॥

( २१ ) पात्रधारण॰ ।

पात्रस्याधिष्ठितस्य [८२४] । निस्सृष्टत्वं प्रव्रज्यापेक्षार्थतायां नियमने [८२५] । अकल्पिकत्वं पाण्डुशुक्लाधिकानां न्यूनता श्यामस्य [८२६] । निर्दोषत्वं कुपात्रकर्मकस्य [८२७] ।

॥ [ इति ] पात्रधारणनै.सर्गिकः ॥ २१ ॥

( २२ ) पात्रपरिष्टि॰ ।

नाधि(?ति)लोभं कुर्वीत परिस्कारेऽल्पघ्यावसानं न पात्रादस्तधा(?)न्वेत् [८२८] ।

याचेत्(?त) पात्रमप्यभावे [४९] । सत्त्वेऽस्य [५०] । आचतुर्बन्धनं तदर्हो [५१] । क्षमस्य परिभोगे [५२] । परीष्टौ विज्ञप्त्या गृहितो ज्ञातेः [५३] । उत्तरत्राप्येतद् द्वये [५४] । चातुर्दात्रान्येषु [५५] । अदोषमज्ञाता च शुद्धिपात्रयोः ज्ञातेः [५६] । दुष्कृतं मौलम् [५७] । ततो निषधौ(?) [५८] । सम्मतावसत्त्वेऽपहासः [५९] । सपरिष्कारैः सत्त्वे चैषाम् [६०] । परिवर्त्त[नि] श्रेष्ठच्छन्देन [६१] । संघेऽस्य निःसर्गः [६२] । एकस्यानेकत्वेऽभिप्रेततमस्य [६३] । योऽन्यस्तमन्यस्य [६४] । इदं प्रव्राज्या(?)के [६५] । प्रत्यनस्यासै दानम् [६६] । चारणेन निष्कर्षः [६७] । सम्मतेन [६८] । श्वोऽस्य करिष्यत्तायां तेनारोचनम् [६९] । संघे सामग्रिवेलायां श्वोऽहमायुस(?ष्म)न्त उन्नतं पात्रं चारयिष्यामि युस्मा(?ष्मा)भिः स्वकस्वकानि पात्राणि गृहीत्वा संघमध्येऽनतरितव्यमिति [६९] । सन्निसाघा(? पाता)र्थमनुष्ठानम् [७०] । रोचनोपसंक्रमणमुपनामनम् [७१] । स्थविर इदं पात्रं स्वच्छं परिमण्डलं परिभोगक्षमं स चेदाकांक्षसि गृहाणेति यथा गुणं रुच्या ग्रहणं अयाचनं गृहीतस्यान्तरितेन, [७२] । अदानरनयोर्वाचोर्णोत्तरस्यामत्याज्यतानाधिष्ठानिरुद्धयोरापन्नस्य प्रवेदनम् [७३] । उपयोजनमस्याभेदान्मन्दमन्दम् [७४] । उभाभ्यामनेन संव्यवहरणम् [७५] । अत्र साधुतरस्य विनिर्युक्तिरुपकरस्य [७६] । लघुतरेऽस्य प्रमासे [७७] । नैव भोजनकरणत्वे [७८] ।

॥ [इति] पात्रपरिष्टिनैःसर्गिकः ॥

( २३ ) वायन० ।

विना मूल्येन विज्ञप्त्यान्येनापि वायने [७९] । न पात्यवापामतरकृतत्वम् [८०] ।

॥ [इति] वायननैःसर्गिकः ॥ २३ ॥

( २४ ) उप्यमानवर्द्धन० ।

ततौ(? त) औद्देशिकत्वं पानीयस्य [८१] । भूयस्तायां वा दुर्नियोगतः सौष्ठवे वा [८२] । क्षयश्चेद्दातुः [८३] । अदानं विनिश्चयस्य [८४] । अनभ्यनुज्ञातै[ः] तदर्थत्वं दात्रेति कर्तृणि [८५] । मौलस्य सम्पत्तौ [८६] । प्रागपतित[त्र]दौद्देशिकानुष्ठानं दुष्कृतस्य [८७] । वस्त्रमप्रसारितस्योपसंक्रान्तेः [८८] ।

॥ [इति] उप्यमानवर्द्धननैःसर्गिकः ॥ २४ ॥

( २५ ) आच्छेद० ।

भिक्षुत्वं वियोज्यस्य [८९] । असकृच्चमाच्छेद्यस्य [९०] । चीवरत्वं तस्य [९१] । समस्तयोर्व्यस्तयोर्वा कायवाचोराच्छेदार्थे प्रवृत्तिस्तस्य [९२] । तन्नियुक्तस्य चेति कर्तृणि [९३] । अन्त्यस्य समाप्तौ पृथग्भावस्य कायतः [९४] । प्रयोगे दुष्कृतस्य [९५] । प्रतिदेयत्वमस्य [९६] । अनङ्गमत्र स्वार्थत्वम् [९७] ।

निष्कर्पवदनुपसम्पन्ने (७८) । स्वतापना(?)यनभूतस्यात्रावरोध आच्छेद्यस्य (७९) । असम्मतिकृतस्यानुच्छवित्वम् (८०) । अनर्थाहितकृत् प्रवृत्तिविभ्रमार्थेनापत्तिः (८१) ।

॥ [ इति ] आच्छेदनैःसर्गिकः ॥ २५ ॥

( २६ ) षड्रात्र० ।

स्वस्थानवत् समयतायामारण्यकस्यैकत्र चीवरे क्रमः (८२) । विप्रवसेदतोऽसावन्तर्गृहगतादर्थवशेनापष्ठमहः (८३) । अप्रसृग्धिरूढम् (८४) । अदोषोऽन्तरायवशेनागतौ (८५) । अनङ्गमत्रातिवाह्यत्वे षड्रात्रस्य प्रक्रान्तौ संकल्पः (८६) ।

॥ [ इति ] षड्रात्रविप्रवासनैःसर्गिकः ॥ २६ ॥

( २७ ) वर्षाशाटी० ।

स्रोपगमाहपूर्वमासादिप्रभृति वर्षाशात्रीं(?टीं) परीच्छेत् (८७) । आस्रवर्षोर्ध्वार्द्धमासान्तं धारयेत् (८८) । पूर्वपरयोरतः कालयोः कर्तृत्वम् (८९) । धारणे परस्य पूर्वस्य परीष्टौ दुष्कृतस्य (९०) । अन्त्यस्य संपत्तौ (९१) । न्यूनत्वं विलीने (९२) । यथोपगति तदनुगम् (९३) ।

॥ [ इति ] वर्षाशाटीनैःसर्गिकः ॥ २७ ॥

( २८ ) आत्ययिक० ।

वार्षिकलाभस्य कर्तृत्वम् (९४) । अन्तर्वर्षे स्वीकृतौ (९५) । उत्सृज्यान्त्येऽत्ययवशाद् दशाहे लभ्यमानस्य (९६) । विभक्तौ चास्यापि (९७) । अविभक्तौ च (९८) । अन्तरेण दात्रुक्तिवशता (९९) । अनन्तरे प्रवारणादिवशाद् द्व्यसम्मततद्दोपकानाम् (१००) । नैनं न स(सं) मन्येरन् (१०१) ।

॥ [ इति ] आत्ययिकनैःसर्गिकः ॥ २८ ॥

( २९ ) परिणामन० ।

पुद्गलेऽन्यत्र संघे वा संकल्पितस्यान्येन चीवरस्य जानतात्मनि परिणामतो लब्धौ (१०१)† । परिणमने दुष्कृतम् (१०३) । अन्यत्र चात्र (१०४) । तत्फले च (१०५) । अन्यस्य च (१०६) । असरत्नसंख्यातत्वे वियोज्ययोज्ययोः (१०७) । एकप्रदेशत्वे च (१०८) । अनापत्तिरलाभे पर्येषविघसखादकतिर्यगादेः (१०९) । कल्पते या(? यद)च्छया प्रतिनिष्पन्तरे सुगतस्य दानम् (११०) । दुष्कृतं संकल्पादाने (१११) । बहिः सीमां गत्वा सांघिकाधिष्ठाने (११२) । व्यग्रेभाजने (११३) । अनधिष्ठायाम् (११४) । एकस्य द्वयोः त्रयाणां वा संघाद्दा भवतो लाभस्यादाने (११५) । अनया योत्रान्येषामंशिकृतस्य (११६) । हारत्वं स्तेयचित्तेन (११७) । न सहसैव निरावासताकरणं विहारस्य (११८) । सानुनयस्य तत्रावलोकं(?)दाने (११९) । अनुपनतौ दशवर्षाण्यतिनमनः (१२०) । पञ्चपिण्डपातेन (१२१) । अनुद्भूतावत्र काले दानपतेरपराणि सामन्त-

† अत्र दृष्टिभ्रमेणायं सङ्ख्याङ्क- १०२ स्थाने, १०१ मुद्रणतां गतः । पाठकैः संशोध्य पठनीयम् ।

कविहारेण सार्द्धम् (१२१)। हिदुक्यो(?)पधैकलाभतायाः करणं कर्मकरणा[त्] (१२२)। सामन्तकविहारेषु प्रमीलने वस्तूनां निक्षेपः (१२३)। आवासिते दानम् (१२४)। न स्थानान्तरीयं द्रव्यं स्थानान्तरे दद्युः (१२५)। दासत्वमेषामप्रतिलम्भने (१२६)। दानत्वेऽपि गृहपतेर्नियतेरभङ्गः (१२७)। बलाददाने ग्रहणम् (१२८)। दद्युर्याचितकत्वेन (१२९)। स्थानान्तरीयं द्रव्यं स्थानान्तरे (१३०)। निर्दोषमसम्पत्तौ चैत्यान्तरे तल्लाभस्य परिणमनमुत्सृज्य बोधिधर्मचक्रमहाप्रातिहार्यदेवावतरणानामेभ्योऽन्यत्र (१३१)।

॥ [इति] परिणामननैःसर्गिकः ॥ २९ ॥

(३०) साप्ताहिक० ।

व्यतीतं दिवसमधिष्ठितस्य साप्ताहिकस्य भिक्षुं श्रा(?)येत् (१३२)। मुक्त्यर्थं धारणे (१३३)। अस्य (१३४)। अष्टमारुणोद्गतौ (१३५)। अत्यये ऽह्ले कल्पिकस्याभ्यवहार्यस्य भुक्तिवदित्यत्र व्यवस्था (१३६)। यस्मात्रार्थे कल्पनं तं प्रत्यनापत्तिः कल्पितेनास्याभङ्गयोः सन्निहितम् (१३७)।

॥ [इति] साप्ताहिकनैःसर्गिकः ॥ ३० ॥

॥ समाप्तश्च नैस्सर्गिकः ॥

## § ४, प्रायश्चित्तिकम् ।

(१) मृषावादे० ।

संज्ञाय संघसन्निधावधर्मस्य धर्मतो धर्मस्य चाधर्मतः परिदीपनं स्थूलात्ययः (१३८)। कश्चित् स्या [अ]त्र परिशुद्धा इत्यावृतीयपरिप्रश्ला(श्ना)त् पोषधे शुद्धसंज्ञस्य तूष्णीम्भावेनातिनामनाया दुष्कृतम् (१३९)। आभ्यां पाराजिक-संघावशेषाभ्यां चान्यस्मिन् मृषावादे (१४०)। भाषमान्(?ण)त्वेऽपि संज्ञालाभेऽस्योत्थानम् (१४१)। न शपथं कुर्वीत (१४२)।

॥ [इति] मृषावादप्रायश्चित्तिकम् ॥ १ ॥

(२) पैशुन्य० ।

भिक्षोः (१४३)। अनन्तरे च (१४४)। ऊनतोद्भावनच्छन्देन (१४५)। श्लक्ष्णेन परुषेण वा (१४६)। यस्य कस्यचिद्च(वा?)राभिमतस्योक्तौ (१४७)। अजातेऽपि मङ्कुत्वे (१४८)। अन्यस्य क्षत्रियताब्राह्मण्यादेः दुष्कृतम् (१४९)। अनुवादः (१५०)। पैशुन्यच्छन्देनामुकोक्तमित्युक्तौ (१५१)। नाम्ना चेत् (१५२)। भिक्षुवा चास्य दुष्कृतमन्यथा (१५३)।

॥ [इति] पैशुन्यम् ॥ २ ॥

(३) खोटने० ।

न हित(?)वायां सम्यक् संघेन (१५४)। भिक्षोश्चाधिकरणतायां खोटने (१५५)।

नैयासिककर्मकृच्छन्ददायकानामेव मौलस्य [५६]। दुष्कृतस्यैव दृष्टाविष्कर्तागन्तुकयोः [५७]। तद्दृश्यमधिकरणान्तरत्वेनाधिकरणस्य संज्ञाने [५८]। अर्द्धत्वं कर्मफलगतस्यातत्त्वेन समुदाचारे [५९]।

॥ [इति] चोदनम् ॥ ३ ॥

(४) देशना० ।

देशनायाम् [६०]। धर्मस्य [६१]। पष्ठात् पदादूर्ध्वम् [६२]। जानत ऊर्ध(?र्ध्व)तायाम् [६३]। पञ्चमात् पञ्चपदिकोपक्रमे [६४]। न पण्डितकृतोत्तरोत्तरपरिप्रष्ण(?श्न)निर्न(?र्ण)ये परिवर्तनिकास्वाध्यायनिकापरिपृच्छनिकोपवासदानदक्षिणादेशनेषु [६५]। अकृतत्वं स्थानान्तरे पूर्वस्याः [६६]।

॥ [इति] देशना ॥ ४ ॥

(५) वाचना० ।

सममनुपसम्पन्नेन हीनं वा नेत्रीभूतस्योच्चारणे धर्मस्याक्षरस्यापि [६७]। उत्सुज्याकामसम्पत्तिम् [६८]। अनुशास्य पाठनम् [६९]। स्वाध्यायनिकां परिवर्तनिकां परिपृच्छनिकां च [७०]।

॥ [इति] वाचना ॥ ५ ॥

(६) कुलदूषणम्० ।

संमन्येरन् पापयोर्भिक्षुभिक्षुण्योः कुलप्रतिसंवेदकम् [७१]। शृण्वन्त्वायुष्मन्तो (?न्ता) कुलेषु कुलदूषका आश्रमेष्वाश्रमदूषकास्तयथा सम्पन्ने शालिक्षेत्रेऽशनिविचका निपतेद् यावदेव तस्यैव शालेरुत्सादाय विनाशायानयेन व्यसनाय संपन्ने वा इक्षुक्षेत्रे मञ्जिष्ठिका नाम रोगजातिर्निय(?प)ते[द्] यावदेव तस्यैवेक्षोरुत्सादाय विनाशायानयेन व्यसनाय मा यूयमायुष्मन्तोऽनेन भिक्षुना(?णा)नया भिक्षुण्या शासनं प्रमिणुत एष भिक्षुरेषा च भिक्षुणी दग्धेव धाना अप्ररोहणधर्मा अस्मिन् धर्मविनये भगवन्तं पश्यत स्थविरस्थविरांश्च भिक्षून् क्षि(?इ)ति कुलेषु कुलप्रतिसंवेदको ब्रूयात् [७२]। अनुत्सहमाने ज्ञप्तिं कुर्युः [७३]।

॥ [इति] कुलदूषणम् ॥ ६ ॥

(७) दुष्ठुलारोचने० ।

अप्रतिसंविहिताद्नुपसंपन्नत्वयोः श्रोतुः [७४]। आख्यातो(?तौ) पाराजिकसंघावशेषयोः [७५]। अकृतसम्मतेः [७६]। अज्ञप्ते संघे [७७]।

॥ [इति] दुष्ठुलारोचनं ॥ ७ ॥

(८) उत्तरमनुष्यधर्मारोचने० ।

सत्यतायाम् [७८]। अदृष्टमत्येऽनुपसम्पदि [७९]। नागारिकपुरस्ताद् ऋद्धिं विदर्शयेत् [८०]। न भिक्षुणी शास्तुः [८१]।

॥ [इति] उत्तरमनुष्यधर्मारोचनम् ॥ ८ ॥

(९) अपवादे० ।

स्थैर्येण चेदर्थो ज्ञप्तिपूर्वकमयं कुर्युः [१८२] । दत्तमहस्य [१८३] । पुद्गलभिक्षुसंघाभक्तलाभस्य मिथ्यापरिणामकत्वेन भिक्षोरन्यत्राप्यनाम्ना चोक्तौ [१८४] । अभूतार्थतायाम् [१८५] ।

॥ [इति] अपवादप्रायश्चित्तिकम् ॥ ९ ॥

(१०) वितण्डना० ।

विनयप्रतिसंयुक्तभाषमाना(?)प्रध्यानभूतायामुक्तौ [१८६] । सूत्रान्तस्य दुष्कृतम् [१८७] ।

॥ [इति] वितण्डना ॥ १० ॥

(११) अनुपरतावच्छेदने० ।

छेदयेन्नवकर्मिको वृक्षं स्तूपसंघार्थम् [१८८] । प्राक् ततः सप्ताष्टेषु दिवसेष्वन्तरतस्य मण्डलकगन्धपुष्पदीपधूपबलिदानत्रिदण्डकं भाषणदक्षिणादेशनां कृत्वा या देवताऽस्मिन् वृक्षेऽध्युषिता साऽन्यद् भवनं समन्वेषत्वनेन वृक्षेण स्तूपस्य संघस्येतिकरणीयं भविष्यतीत्युक्त्वा जानीहि वादेन [१८९] । विकारश्चेदभिमोक्षः रुधिरस्यन्दनशाखाकम्पनपत्रशटनादिरुद्ध(?दि)श्येत पक्षेऽत्र दानमात्सर्ययोः संवर्णनविवर्णनं कुर्यात् [१९०] ।

॥ [इति] अनुपरतावच्छेदनम् ॥ ११ ॥

(१२) वीजप्ररोहनाशने० ।

अविनष्टतायाम् [१९१] । अकृतकल्पवीजप्ररोहच्छेदयोः [१९२] । ओशीरकादौ विनाशने [१९३] । यथाकथञ्चित् [१९४] । धूननेनापि [१९५] । अवष्टम्भेनापि तृणशादपांसुप्रभृतिभिः [१९६] । उत्सर्गादिनापि [१९७] । वातातपेऽपि स्थापनेन [१९८] । शुष्केऽपि स्थण्डिले [१९९] । तच्छन्देन स्वयमन्येन वा [२००] । विनष्टे मूलीनां विनष्टापरिमाणानाम् [१] । गण्डतः [१]† । दुष्कृतानां प्रयोगे [२] । प्रतिप्रहारमस्यात्र भेदो न वस्तुतः [३] । अन्तर्लं विरो(?रू)ढत्वेऽपि निर्मुक्तेः [४] । तरप्सुधा(?द्वा)रे जलाच्छैवालकटमयोः [५] । अधःसंपुटितास्थिनिगिलनं कारस्य [६] । साधु साधयं छिद्येतेत्युक्तेर्नियुक्तिः [७] । अकारत्वमृद्धेः [८] । तद्वरं वीजान्तरत्वेन वीजस्य संज्ञाने [९] । त्वक्फल्गुपाण्डुपत्रपुष्पितपुष्पपक्वफलानामद्ध्मृततया व्यवहारः [१०] । नानपेतस्यैषां प्रकृतेर्मूलभूतस्य [११] । अर्द्धजाततयोप्तस्यासंजातमूलस्य वीजधान[योः] [१२] । क्षुप्यपर्यच्छनककाचिकागालचीवरादिपुष्पाणामर्द्धप्ररोहतत्वेन [१३] । तप्तपूपादिकोरणचंक्रमणशालाधाकर्षणमण्डलकामा ज्ञानतदभिप्रायतायामनापत्तिः [१४] । छेदने च कुशादेरापद्यस्वधेन तेनासम्भवे मोक्षः [१५] । अतथैकेनानेकत्वे [१६] । नावीजधर्मणो

† अत्रापि टिप्पणमेणायं संख्याङ्को द्विरुक्तो भाति ।

दो[प ?]कृत्यम् [७] । संस्पर्शोऽग्निना क्षतिः शस्त्रनखशूकैर्म्लान्युत्पाटन उत्(?द्)दलनभिदुच्छित्तिरिति कल्पाः [८] । नाबीजत्वगते कल्पनेऽपेक्षत्वम् [९] । नानग्नित्वमत्र बाष्पस्य [१०-११] । सम्यक्त्वसंख्यामग्निना कल्पने फलानां कल्पने समुदायरूपस्य तन्त्रीकरणम् [१२] । नैकतः प्रदेशात् समुदायस्य सम्भावनोत्थानम् [१३] । कृतत्वं कल्पानां भिक्षुकृत्यता [१४] । भूमो(?मौ) चाकल्पिकायाम् [१५] । नानभुक्षितं शीतेन वारिणा साप्ताहिकं यावज्जीविकमभ्यवहरेत् [१६] । नाभिन्नमेतेन यामिकम् [१७] ।

॥ [ इति ] बीजप्ररोहनाशनम् ॥ १२ ॥

## ( १३ ) क्षेपणे ।

द्वादशानां पुद्गलानां कर्तृत्वम् [१] । असम्मतानामपि [२] । प्रतिलब्धप्रयोगानां च [३] । अवध्याने वा स्वगतेनार्थेन सश्रुतं क्षेपे वा परव्यपदेशेन [४-५] । मौलस्य गणिते [६] । अन्यत्र दुष्कृतस्य [७] । नासमर्थमल्पस्याप्यधिवासनायामीरयेत् [८] । न स्वयमेनं द्वेष्यः कर्मणि युञ्जीत [९] ।

॥ [ इति ] क्षेपणम् ॥ १३ ॥

## ( १४ ) आज्ञाविहेठने ।

न न गणयेयुश्चोदनगताज्ञा तूष्णींभावविहेठकोक्तपुद्गलसमु(म्मु)खावधायकपरव्यपदेशक्षेपकान् [१] । ज्ञापनेन [२] । भिक्ष्वाज्ञाविहेठने [३] । तच्छन्देन [४] । अन्योक्त्या दुष्कृतं तूष्णीम्भावेन [५] । न स्मरामीति च [६-७] । न चेद् दुःखमाख्येयम् [८] । तस्माद् वध्यदर्शनपरिप्रश्ने विलप तावत् पानीयं तावत् पिब विश्राम्य तावन्न पश्यामि न खं वा परमार्थतः सत्त्वं न पश्यामि वध्यश्चेत्युक्तावनापत्तिः [९] । न यत्र साक्षित्वेन करणमापतेत् तत्रावस्थानं भजेत [१०] । नाकृतोपघातद्वारबन्धः साक्षेपं दद्यात् [११] ।

॥ [ इति ] आज्ञाविहेठनम् ॥ १४ ॥

## ( १५ ) शयनासने ।

मञ्चपीठवृशिकोचकबिम्बोपधानचतुरस्रकमिति शय्यासनम् [१] । एकान्न(?कोन)पञ्चाशद् व्यामास्तदुपविचारः [२] । द्वारकोष्ठकात् परिवृते [३] । तदतिक्रमाय विस्मृत्यापि प्रस्थानमन्तश्च स्वमसमाप्त्यादिना विपरोक्षीभावः [४] । प्राक् संभेदात् प्रयोगः [५] । संभेदेऽतिक्रमश्च निधानम् [६-७] । नैते कृतकारितो(?णो)द्वारस्य [८] । नावलोकितभिक्षौ न संकटप्राप्तस्य [९] । कारकवद् भोगः [१०] । द्वयोरेकस्य निपादे पश्चादुत्थायिनः करणीयवचा [११] । समं चेन्नवकस्य [१२] । तुल्यतापामुभयोः [१३] । अलज्जिगान्तरजीर्णग्लानानुपसंपन्नानामनवलोक्यत्य-

मत्र [७७] । एष विहारः पश्य चेदं शयनासनं गृहाण चापावरणीदानमित्यवलोकनानि [७८] । संभेदाशयो वातेन परिवर्चनं वृष्ट्या पुटान्तरप्राप्ति[ः] दीपिकाभिश्च [७९] । शयनासनत्वं सांधिकता तस्य स्वयंनियुक्तकृतत्वोपनिक्षेपस्थाम्यचकाश इति कर्तृणि [१८०] । मौलस्य निष्ठाने [८१] । प्रयोगे दुष्कृतस्य [८२] । एतत् तावत्कालमन्तरमन्येनाधिष्ठिते [८३] । पादगलिके च [८४] । उत्तरत्र च चतुष्के [८५] । नैवास्पृश्यतायाम् [८६] । पिण्डाय चेत् प्रविष(भ?)ज्याप्रविष्टे वातवर्षमागच्छेद् विहारस्थाः प्रवेशयेयुः [८७] । आहृत्य प्रविष्टं आगच्छेत् [८८] । नैतदर्थतायामदोषो ह्रासो वा [८९] । विस्मृत्य चेद् बहुसमतिक्रान्ताध्वनो गतो वा स्मृतिं लभेत न भूय एवं करिष्यामीति चित्तमुत्पादयेद् वाचं च भाषेत [१९०] । प्रतिपथितश्चेद् भिक्षुमारागवे(?)दुधारायैनं प्रार्थयेत् [९१] । कर्तृत्वं प्राप्ततायामत्र येन प्रतिज्ञातं प्रक्रमिषन्नावसादसंकटप्राप्तोऽभिसंक्षिपेत् शयनासनम् [९२] । प्रस्फोट्य मलिनश्चेत् [९३] । अपर्यन्तनम् [९४] । अवलोकनमन्य एव कुर्वीत भिक्षोः [९५] । अभावे श्रामणेरस्य [९६] । तस्यापि गृहपतेः [९७] । सर्वाभावे चतुर्दिशं व्यवलोक्यापावरणीं गोपयित्वा प्रक्रामेत [९८] । अन्तरमार्गे चेद् भिक्षुं पश्येत् तं प्रदेशमस्मै ब्रूयात् [९९] । द्वारे चेदन्तर्गृहोपनिमन्त्रणायां वध(?बन्धः) आगच्छेत् कुड्यस्य मूले वृक्षस्य वा निधायाध्वनि प्रविशेत् [२००] । दद्युस्तत्रासनानि [१] । न स्वयमानयेयुः [२] । आगारिकः श्रामणेराणामेतत् [३] । अभावे चावलोक्य गृहिणमानयनार्थमागमनम् [४] । स्थापयेयुः गच्छन्(तः) वयमानेष्याम इति ब्रुवत्सु [५] । नि[ः]श्रयकरणीयैस्तैरनानीतान्नानयने [६] । अभावे स्वयम् [७] । सर्वतायां गण्डिमाकोट्य [८] । दद्युर्विहारे [९] । निमन्त्रणकेभ्यः स्वार्थे याञ्च[ां]यामासनानि [२१०] । भिक्षुथे(?श्री)पामारक्षायै स्थापयेयुः [११] । एकान्तेऽसौ तिष्ठेत् स्वकर्म कुर्वन्नवधानदानश्च [१२] । प्रक्रान्तेषु प्रवेशनम् [१३] । शोचनं नाशितानां वकसेनाद्भिः [१४] । स्नेहिनोपस्थानेन [१५] । अशुचिम् मृदेपलुकेन गोमयेन च [१६] । छिद्रिरशुद्धं मातस्य [१७] । गृहिणा निपाद्य प्रवेशितस्य दृष्टः प्रवेश्यत्वम् [१८] । जीर्णश्चेद् ग्लानो वोपधिवारिकस्य [१९] । आख्येयत्वं तस्य [२२०] । ग्लानमवलोकयेत् सर्वैः [२१] । निषद्य [२२] । न तत्रासनं गृहीत्वा गच्छेत् [२३] । उपस्थायको ग्लानस्य तत्रासनान्युपस्थापयेत् [२४] । कुशलपक्षापगच्छत्याचार्योपाध्याये न चेदन्यथा वृद्धिः कुशलपक्षस्य पृष्ठतो गच्छेत् [२५] । स्वयमस्यायासनं नयेत् [२६] । नापृष्ट्वा गतिम् [२७] । स्वयमेव चैतदानयेत् [२८] । अभ्यवकाशधर्मश्रवणे वातवर्षप्रवेशनं शयनासनस्य [२९] । स्वयमशक्तो गुरुतया वृद्धानां नवकैः सह परिशुद्धिः [२३०] । पाकेन सार्द्धं स्थापयेयुः [३१] । दद्युर्विहारान्तरे याच्यमानं शयनासनं चन्नश्च [३२] । न चेद् वृष्टिविपाशङ्किता वा [३३] ।

घातवर्षश्चेदन्तर्मार्गे स्याद् वृक्षस्य मूले कुड्यस्य वा स्थलं कुर्युः । प्रच्छादयेयुश्च वस्त्रेणैकेन प्रत्यवरेण । विहारं नीत्वा वस्त्राणां शोषणम् । दग्धायुद्धौ च सांघिकस्यापि निष्कासनम् । वृत्ते स्वपात्रचीवरनिष्कासने । निष्कासितस्य भिक्षुमारक्षायै स्थापयेयुरसमर्थतरम् । नासाद्यतायां प्रविशेयुः ।

॥ [ इति ] शयनासनप्रायश्चित्तिकम् ॥ १५ ॥

( १६ ) संस्तरे ।

कृतं संस्तरमन्तर्गृहे छोरयेयुरवलोक्य गृहपतिम् । अरणे विकोपयेयुर्वा । कृतत्वमस्य शिरोन्ते पादान्ते वा कृतत्वे । चीवरशोपना(?णा)यापि तृणप्रज्ञसेश्छोर्यताम् । दानं मृगयते प्रतिज्ञातच्छोरणाय । प्रज्ञापयेयुचं(श्रं?)क्रमेषु घृष्टोत्तलयोस्तृणानि । तेषामपि छोर्यताम् । उत्सर्गे छोर्यस्य छोरणमगतस्याकरणीयताम् । अन्यदा कालेन कालं प्रत्यवेक्षणं परिवर्त्तनञ्च । स्निग्धमधुरमृत्तिक[म?]न्वहम् । अनुपक्षमन्यत्र । अवबध्य रज्ज्वा वृक्षेऽवलम्ब्य चंक्रमेषु कक्षपिण्डकानां स्थापनम् । कर्परे गोमयं स्थापयेत् । प्राग् गतं प्राक् प्रक्रमिष्यन्त्यस्मात् तुल्यत्वं साद्योपभोगे । तत्पतीनाञ्चासांघिकेऽवलोक्यत्वम् । सांघिकविहारत्वमगडवालुकालि(सि?)कताद्यात्मकत्वं तत्र शूचा(?)दिनवयोग्यत्वं भूमे[ः] स्वयंनियुक्तकृतसंस्तरस्योतकर्तृणि ।

॥ [ इति ] संस्तरप्रायश्चित्तिकम् ॥ १६ ॥

( १७ ) विहारे ।

भिक्षुत्वसांघिकविहारत(त्वी?)योः कर्तृत्वम् । न चेत् तत्संबाधसंघसंक्षोभजन्मानुपशमप्रतिचिकि(की?)र्षणे । परेणापि परानुवृत्त्या च । शिक्षमाणश्रामणेरश्रामणेरिकाणां दुष्कृतस्य । आसां च । हासेन च गृहिणामपुण्यस्य बहुनः । निष्कर्षणम् । वृत् । आरूढतायाम् । भिक्षुणा सांघिकविहारस्थानस्य । अनुप्रस्कन्द्य मुक्त्वा ग्लान्यभयवशतामारूढौ । निदर्शनमेतद् विहेठनच्छन्देन भिक्षोर्विहेठनानाम् । अनुप्रस्कन्द्यापातः । सांघिकविहारोपरिष्टतलकत्वं कर्तृ । न चेत् परिणामिकत्वं फलकतद्विधच्छदनता वा । कीलपादकत्वं चाक्रमणीयस्य । मुक्त्वोत्तानताम् । दत्तप्रतिपादकत्वञ्च । आक्रान्तौ । वृत् । आहार्यपादकारोहः । स्वपरिभोगार्थं ततोऽन्यत्र । सप्राणकोपभोगः । द्वारकोश(ष?)दानं संपादयेत् । अर्गडकानाञ्च । वातायनानां मोक्षम् । विहारस्य कर्तृत्वम् । चतुष्टयस्येपथानां मात्रस्य । न चेत् सर्वत्वेन शैलः पक्वैलो दारुमयो वा । छादनञ्चोदकत्राणेन । कृतं पश्यामि निश्चितं चेत्यनुक्तस्य दान-

पतिना । त्रयादूर्ध्वमिष्टकापर्यायदानसंपादने । परेणापि । तद्दिने । अन्यत्रापि निष्कर्दमात् । अमुक्तत्वे चोदकप्रमाणाम् । अदत्तत्वे चाखातमूलपादस्य । औपरिष्टस्य वा द्वारकोश(ष ?)स्य । निर्दोषमाधात् पूर्वः ।

॥ [इति] विहारप्रायश्चित्तिकम् ॥ सू ॥ १७ ॥

( १८ ) असम्मतावनादे ।

अपराजितं सूत्रविनयमातृकाधरमनूनविंशतिवर्षं नागरलपितमुपनामितकायत्वे भिक्षुण्याः कृतप्रतिक्रियां भिक्षुण्यववादकं संमन्येरन् । पोषधे पञ्चदशा[ना]-मन्त[ः]सीम्नि । अभावे सूत्रादिधरस्य प्रवृत्तप्रातिमोक्षम् । तस्यापि पाराजयिकसंप्रकाशनम् । गुरुधर्माणां वा । पश्चिमकः कश्चिद् यो भगिन्यः । समग्रो भिक्षुणीसंघः परिशुद्धसमवेतोऽनवद्यो मा वः कश्चिदसंमतः संघेन पुद्गलोऽववदते संघाद् आगच्छति पुद्गलोऽववादको न वः कश्चिदुत्सहते भिक्षुरववदितुं संघाद् योऽववादानुशासनी अप्रमादेन भगिन्यः सम्पादये-तेत्यस्य । मुक्त्वोत्तरधर्मप्रभावचन्तम् । एकेनापि विनातस्य(नाऽस ?)म्म-तस्य च भिक्षुण्यववादेन पूर्वं सम्मतस्यासम्मतत्वम् । निर्दोषमपूरो(?) संघस्यार्हस्य याञ्चायाम् । तस्याश्च ।

॥ [इति] असम्मतावबादः ॥ सू ॥ १८ ॥

( १९ ) अस्तमितावबादे ।

अस्तमितायाम् । मुक्त्वा सर्वरात्रिकं धर्मश्रवणं भिक्षुण्यववादे । न चेदपावृतद्वारस्तदा तद्भूतस्याग्रतो विहारस्य वर्षकः ।

॥ [इति] अस्तमितावबादः ॥ १९ ॥

( २० ) आमिषकिञ्चित्कावबादे ।

कुर्याद् वैशारद्याय धर्मपरिपृच्छायां भिक्षु[ः] भिक्षुण्यामिषोपसंहारम् । अप्कुश्वकपरिष्टिकिलोठकमुरुचिकानाञ्च । गृहीतादौ भिक्षुः । भिक्षोर-तथाभूतस्यामिषकिञ्चित्कहेतोर्भिक्षुणीरववदतीति विवादे ।

॥ [इति] आमिषकिञ्चित्कावबादः ॥ २० ॥

( २१ ) चीवरकरणम् ।

अज्ञातिकतायां भिक्षुण्याः । स्युतौ चीवरस्य ।

॥ [इति] चीवरकरणम् ॥ सू ॥ २१ ॥

( २२ ) चीवरप्रदाने ।

दत्तौ । अपटकप्रदाने । न चेत् मुषितायै सौभापणिकस्योपसंपद्य-मानायै परिवर्त्तकेन वा ।

॥ [इति] चीवरप्रदानम् ॥ २२ ॥

( २३ ) भिक्षुणीकजलयानोढौ ।

[स]भिक्षुणीकजलयानोढौ वाहयेयुः पाथेयम् [१] । कल्पकारकल्पकारी-श्रामणेरश्रामणेरिभिः [२] । न्याय्यमितरेतरपाथेयग्रहणं भिक्षु-भिक्षुणीनाम् [३] । अन्योऽन्यप्रतिग्राहणञ्च [४] । न ग्लानम् [५] । सब्रह्मचारिणोऽध्वनि छोरयेयुः [६] । वहेयुरेनम् [७] । एवं भिक्षुण्यः [८] । कुर्युरत्र परस्परं साहाय्यम् [९] । शिरोन्तग्रहणेन [१०-११] । ग्रामप्राप्तानामदोषं प्रक्रमणम् [१२] । समुदानीय ग्लानभैषज्यपिण्डपातश्च [१३] । एकं च सरूपमुपस्थायकं स्थापयित्वा [१४] । मुक्तौ(?भुक्तौ) सभयतायां मार्गस्यैकसार्थपालमभिन्नप्रयाणतायामेकभिक्षुण्यापि सङ्घातिवाहने [१५] । प्रतिक्रोशम् [१६] । प्रतितदर्द्ध (दूर्द्ध ?) दुष्कृतम् [१७] । सभिक्षुणीकाध्यारूढि (?) [१८] । सान्तरायतायामुभयकूलस्योच्छ्रूज्या ( त्या ?)सन्निधौ युगपदेकनावा तिर्यक्पारसंतरणादन्यत्र [१९] । वङ्कवटवर्त्तपरिहृतिकर्णयष्टिदण्डवंशावमङ्गकर्णधारवशाच्च तदर्थारूढौ प्रस्थानान्तरात् [२०] ।

॥ [ इति ] भिक्षुणीकजलयानोढिः ॥ २३ ॥

( २४ ) एकस्थाने ।

स्त्र्येकाकितारहस्त्वमप्रवृत्तजनप्रचारतया प्रदेशस्य [१-२] । साधारणत्वमन्तर्व्यामता चेति कर्तृणि [३] । निषदने [४] । आनिपादप्रतिष्ठापनमेतत् [५] । एकनिषद्या [६] । भिक्षुण्यास्थाने [७] ।

॥ [ इति ] एकस्थानम् ॥ उद्दि ॥ २४ ॥

( २५ ) पाचितोपभोगे ।

भिक्षुणीपरिपाचितायाम् [१] । अभूतैर्गुणैः [२] । अकृतनिमन्त्रणके [३] । कृते चातिरिक्तस्य [४] । अभ्यवहार्यस्य [५-६] । प्रतिपत्तिसंपत्त्या [७] । तच्छ्रुतेन वा [८] । अभ्यवहारे कण्ठेन तदेषः [९] । ह्रासकृत्वं परार्थस्य [१०] । देहि चोक्ते पिण्डाय प्रविष्टे [११] ।

॥ [ इति ] पाचितोपभोगः ॥ २५ ॥

( २६ ) परंपराभोजने ।

अधिवासयेद् भक्तोपनिमन्त्रणमन्तर्गृहेऽपि [१] । कालं ज्ञात्वा प्रविशेयुः न सात्र ( यं ? ) कालम् [२] । गण्डीं दत्त्वा [३] । स्वपर्षदं तत्रावलोकयेत् [४] । आगन्तुकं स्थविरः [५-६] । न सहस (सा?) भक्तच्छेदं कुर्यात् [७] । तिष्ठेयुर्याचमानाः पानकाय [८] । समं पश्चाद् वानुपेतचीवरलाभद्वितीयनिमन्त्रणलब्धिः [९] । भोजनीयेन [१०] । अन्तर्गतेन पञ्चके [११] । अनेनैव चेदन्यत् [१२] । अग्लानस्याकृतकर्मणोऽनूढसाध्वनि [१३] । अधिवासनायां दुष्कृतस्य [१४] । अभ्यवहारे मौलस्य [१५] । समभामन्तराश्चन् पर्यन्नभूतं चीवरम् [१६-१७] । अध्यार्द्धयो-

जनम् । अन्यत्रापि । अत्र वा नौगमने वा । संमार्जनं किलिश्च-मात्रस्योपलेपो गोपिटकमात्रस्येति कर्म । सांघिकता स्तौपिकत्वे चास्य । अशक्तिर्ग्लान्यस्य परिमाणम् । अनियन्त्रणकत्वं प्रव्रसेः । संदर्शनस्य च । असत्त्वं विहेठनकृतस्य । सांघिकस्य चाह (?) दांदेशिकस्य निक्षेपे चान्यत्र पञ्चके । धर्मत्वमस्य । ग्रहणेऽप्यन्यस्य स्वीकरणं दुःभिक्षो यावत् संपत्तिनिमन्त्रणकानाम् । भुक्तिश्च । दानं वा । अनभिरुचि-संभावने दातुर्द्वित्रिग्रासाभ्यवहारादूर्ध्वं गृहपते[ऽ]यं भिक्षुः पिण्डकेन विहन्यते नुमोदस्वास्मै ददामीत्यभिरोच्य ।

॥ [ इति ] परंपर[ा]भोजनम् ॥ २६ ॥

( २७ ) आवसथपरिभोगे ।

अनेदंधर्मकः सगृहिस्वामिको( कः ? ) सर्वपापण्डिक आवसथः । अग्ला-नस्याप्रचारितस्य दानपतिना । भुक्तवतस्तदीयमभ्यवहारं मौलस्य । उपितवतो वासे दुष्कृतस्य । अस्वामिकश्च । तीर्थ्यवत्त्वमत्रैदं प्रव्र-ज्य(व्राज)स्य । ज्ञातेश्च ।

॥ [ इति ] आवसथपरिभोगः ॥ २७ ॥

( २८ ) अतिरिक्तग्रहणे ।

प्रवारयतः । अपरिमितम् । अकृतयथासुखस्य । गृहिणः । अर्धपञ्चमानां पक्वतण्डुलमागधकप्रस्थपरिमाणानां प्रस्थानामुत्सृज्य व्यञ्जन-मूर्ध्वं सहापि सहायप्रत्यंशेन पिण्डपातः । अभ्यवहृतासुत्कृष्ट[ा] । अत्र दुष्कृतस्य । परकृते च । अन्यथानापत्तिः । असंष्क(स्क ?)तस्य च । प्राग्घात् प्रभूतं चेद् भिक्षुं संविभजेत ।

॥ [ इति ] द्वित्रिपात्रपूर्णातिरिक्तग्रहणम् ॥ २८ ॥

( २९ ) निरिक्तकरणे ।

भुञ्जीत यावदाप्तम् । नोत्तिष्ठेद् विप्रकृतामिषः । पात्र[त]स्तावतो यस्य कस्यचिदालवणमभ्यवहार्यस्यादाने तद्विधत्वम् । स्थानोत्सर्गः प्रवा-रणम् । निषण्णस्य । विप्रकृतमूलखादनीयाद्यामिषस्य । मूलगण्डपत्र-पुष्पफलखादनीयेभ्योऽन्यपै(पे ?)याच कल्पिकमसंसृष्टमकल्पिकेनाभ्यवहार्यमभि-संभावनीयप्रदेशस्य प्रतिग्राहयतो निवाणं(?) कृत्वा । देहीत्यस्यैतत् । गच्छेत्यपि । मुक्तमिति च । न च तावत् शब्दोपसन्धाने । पर्याप्तमित्यपि । स्थानस्य कलाचिकया ऊर्ध्वमसंपादकत्वे यवाग्वाः पेयत्वम् । तर्पणस्याप्रज्ञायमानपञ्चाङ्गुलस्य । अप्रतिग्राहणत्वं विहेठ-नस्य । न बहिःसीमानमसंभावनीयप्रदेशानप्रवस्थे निरिक्तकरण-

स्रोत्थानम् । नापाभिस्थं करणीये । अकरणीयत्वमकल्पिकस्य संसृष्टस्य वा तेन । अनुत्सृष्टस्य स्थानस्य कर्तृत्वम् । कृतवतोऽपि संकल्पमभोजने । याचितस्य । गच्छ तत्रैव मनत्विति वचनं करणम् । यथासुखं परिभुंक्ष्वेत्येके । द्विस्थानभ्यवहृत्यालोपम् । न निर्वृत्तक्रियः परिभुञ्जीत । भुञ्जीतान्यस्य कृतनिरिक्तम् ।

[ इति निरिक्तकरणम् ] ॥ वृत्त ॥ २९ ॥

( ३० ) एकासनभोजने ।

प्रवारितस्याकृतनिरिक्तस्ययोः । अभ्यवहृतौ । आमिषमात्रस्य ।

॥ [ इति ] एकासनभोजनम् ॥ वृत्त ॥ ३० ॥

( ३१ ) प्रवारितनियोगे ।

नियोगे[ऽ]स्य भिक्षोः ।

॥ [ इति ] प्रवारितनियोगः ॥ वृत्त ॥ ३१ ॥

( ३२ ) गणभोजने ।

प्रतिनियतभक्तावासकेभ्योरन्यैरन्तःसीमस्थैर्भिक्षुभिः संघभूतैरसहभक्ततायाम् । सहितस्य । सहभोक्तृतया । त्र्यादिना । भिक्षूणां पाद्धिधस्याचीवरद्वितीयभक्तलब्धेरनूहस्य च नावा । महासमाजादन्यत्र । अन्यास्थानिद्रं लिङ्गप्रव्रजितभक्तात् । अभ्यवहारे स्थितत्रागन्तव्यतानामन्तःसीमास्थानामपि पृच्छागतत्वम् । भुक्तिरर्द्धातिक्रमः । संचारणे स्तोकस्यापि । यस्य कस्यचिदेकभक्तत्वम् । न गमिकागन्तुकग्लानतदुपस्थायकोपधिवारिकादन्यो यथनोपन्याहारादस्तुक्तवायां सर्वैरुत्कटं भुञ्जीत ।

॥ [ इति ] गणभोजनम् ॥ ३२ ॥

( ३३ ) अकालभोजने ।

स्वमध्याह्नपर्यन्तारुणोद्गत्यन्तरमकालः । तत्त्वे । वृत्त । खादनीयभोजनीयाभ्यवहारे ।

॥ [ इति ] अकालभोजनम् ॥ ३३ ॥

( ३४ ) सन्निहितवर्जने ।

पूर्वभक्ते प्रतिगृहीतं पश्चाद् भक्ते तत्र यामातिक्रान्तमिति सन्निहितम् । नोद्गृहीतं गिलेत् । न पक्वमु(म्रु)षितं चान्तःसीम्नि । भिक्षुपक्वस्य । सोऽत्र पाको च आमस्य । तच्चामसृद्नां प्राक् त्रिभागात् स्विन्नत्वात् । पर्णपरिवृत्तेर्मृदूनाम् । द्रवाणां द्वितीयमुत्थितत्वात् । नार्पिना (सर्पिना?) कल्पकरणं पाकः । न अन्मायत्तनिर्मितत्वं पाससानुषितत्वम् । प्रदेशस्वत-

यापि पात्रस्य तद्भूमिपक्वता (९) । न पक्तुस्तद्गतत्वेन (१०) । नाभेरपात्रत्वम् (११) । न ततो निष्क्रष्टनिर्गतयोस्तत्त्वम् (१२) । वासत्वमुपविचारस्य (१३) । व्यामम् (१४) । ऊर्ध्वञ्च नियतस्संभाव्यस्य (१५) । अभ्यन्तरस्य च (१६) । तत्त्वं पुरान्तरस्योपरिष्टस्य (१७) । नान्याधिष्ठितत्वेऽन्यवासत्वम् (१८) । न यावज्जीविकानामुद्गृहीवान्तःपक्वभिक्षुपक्षेषु तत्प्रतिषेधे संशितत्वं कालं प्रति (१९) । अर्धामिषं परिशुद्धे (२०) । पानादयो मलस्नाने (२१) । बहिरस्य गोमयेन मृदा वा परिघृष्टोदकेन सम्मार्गो निर्मादनम् (२२) । अन्तर्द्विश्चोदकगण्डूषछोरणम् (२३) । निर्मादितत्वमाशयतो द्वित्र्यधिकं दाने विस्रवतोऽपि पात्रस्य (२४) । निर्दोषं विरलने (२५) । निष्परिगोधे च संस्पर्शे (२६) । प्रक्षालितस्य च त्रिरुपगोमयमृत्तिकान्यतरेणास्निग्धतायाम् (२७) । अपनेयत्वमुत्थितस्य (२८) । तस्यैव प्रदेशपरिगोधे प्रक्षाल्यत्वम् (२९) । निःस्नेहतायै स्निग्धस्य च घटादेर्गम्भीर उदके ह्रदे निधानम् (३०) । आमत्स्यकच्छपमण्डूकशिशुमारशुक्तैर्निर्लेहाधारणम् (३१) । दारुतोऽपि निःस्नेहतापत्तिः (३२) । निर्मादने निःस्नेहितस्योपादुकेन गोमयेन वा शुद्धत्वम् (३३) । अर्धत्वं लवणक्षारकलुषोदकभूतस्य लवणादेः (३४) । कल्पमानता च सर्वस्याकाले (३५) । असत्त्वमकरणे लवणक्षारयोः स्वकार्यस्य (३६) । उत्पत्तौ प्रतिबिम्बस्योत्तरस्य (३७) । कटकफलेनाम्भसः स्वाच्छयो(च्छ्यो?)पगमनम् (३८) । क्षारेण सक्तुपिण्ड्या (३९) । स्नेहनमविशरणायास्याः (४०) । नाप्रज्ञायमानस्य सत्संरुग्यत्वमाकरेष्वनुप्रविष्टस्य (४१) । प्रदेशव्यवकरे तस्यैवापनेयत्वम् (४२) । चञ्चुना काकेन स्पृष्टतायां सामन्तकस्य (४३) । न तत्संयुक्तभारास्पृष्टौ न तस्य स्पृष्टता (४४) । न भ्रान्त्या स्मृतिप्रमोषेण वा (४५) । नाभ्यां व्याधितस्य स्थापने (४६) । स्वल्पतरमन्तरं स्थानमुपनयेत् (४७) । न वैवरिके नोद्गृहीतत्वं प्रतिग्राहित[ा] वा (४८) । नानयेत प्रतिग्राहणार्हसम्यन्यस्य ग्रहणम् (४९) । सम्बद्धत्वं तेनान्तररज्ज्वादिसंबद्धतायाम् (५०) । एकत्वं सन्निहितप्रतिगृहीतेषु तुल्ययो[ः] संवरेणाभिन्नलक्ष्योः (५१) । परेण चावरस्य (५२) । गृहिवत् स्त्री-पुंसोः परस्परम् (५३) । श्रामणेरिय स्पृष्टवा(?)गोपनात् तद्वदोपकारी (५४) । न सापेक्षेण दत्तस्योत्सृष्टत्वम् (५५) । अर्द्धत्वं निरपेक्षोत्सृष्टस्य सापेक्षतायां तस्मान्नैतद् याचेत (५६) । न गृह्णीत जानन् (५७) । नाकल्पिकत्वं भागनयने स्पृष्टौ नीतस्य प्रवेशने तद्रूपेषु प्रत्ययेषु (५८) । वाहासनं शकटे वर्ज्यत्वम् (५९) । पूर्णेऽपि (६०) । ग्लानाधिरोहे च (६१) । कर्णस्य नावि (६२) । आसनस्य च तद्धारणार्थस्य (६३) । सांधिकौषधयोश्चोद्धलतोर्घट्टनापनयनेनाग्निनिर्वापणेन चीवरकर्णकादिभिर्वा तदानेनेत्यादौ प्रयतनम् (६४) । कल्पिकमसम्पत्तौ विधेर्नदीसंतारणार्थे नेतरि च संप्रापणार्थमुद्गृहीतमभावेऽन्यस्य पथ्यदनम् (६५) । उत्साहनमभावे वोढुरस्य दानपतेः (६६) । वहनमसम्पत्तौ स्वयम् (६७) । संपादनञ्च तत एव दान-

परिवर्त्तग्राह्यस्य [१९८] । भोज्यत्वमसाप्यसंपचावन्यस्य [९९] । अप्रतिग्राहितस्य च प्रतिग्राहकाभावेऽस्य चान्यस्य वा कृतभक्तच्छेदस्य [२००] । प्रथमेऽह्नि व्याघ्रमुष्टेः [१] । द्वयोः द्वितीये [२] । तृतीये यावदाप्तम् [३] । भोज्यत्वं फलानामकालेऽप्यकृतकल्प[ा]नामप्यप्रतिग्राहितानां च [४] । निर्मक्तस्य [५] । तैव्ये क्षुदः [६] । मूलानाञ्च [७] । स्वयं च पातनोत्पाद्यते साक्षात्वं च [८] । उत्तरकौवर(रव ?) प्रसिद्धेः सर्वत्राप्रतिगृहीतोपभोगादौ प्रारिप्सायामभिध्यानम् [९] । न करके पानीयं पिबेत् संभवे हस्तनिर्मादनप[ा]त्रयोः [२१०] । असम्भवे चाप्रतिग्रस्तम् [११] । नास्य सजलतायामपि तत्त्वं भजेत [१२] । अविध्यमस्य पिधानके [१३] । काष्ठमयं शैलमयं मृण्मयमिति [१४] । धारयेत् करकस्यालकम् [१५] । काष्ठमयं शैलमयं वा [१६] । निर्दोषं भाजनस्योपयोगे पत्राणामप्रतिग्राहितत्वम् [१७] । अविशेषोऽत्र भुक्ताभुक्तयोः [१८] । उपयोजनमसम्भवेऽन्यस्याभुक्तानाम् [१९] ।

॥ [ इति ] सन्निहितवर्जनम् ॥ ३४ ॥

( ३५ ) प्रतिग्राहितभुक्तौ ।

भुञ्जीत त्यक्तमाशयतो दात्रान्यप्रतिग्राहकाभावे स्वयं प्रतिगृह्य [२२०] । सम्मुखान्तःसीम्न्यतिसंभवनीये प्रदेशेऽवस्थितौ नोत्तानपाणिना काये तत्संबद्धे चोद्ग्रहणसमर्थतोऽनुपसंपन्नादमनुष्यादपि दित्से(त्सो?)याङ्गेन तत्संबन्धेन चोत्सृष्टस्य प्रतीष्टिः प्रतिग्रहः [२१] । जुगुप्सतायां जनपदस्योपनिक्षिपेत्युपदर्शिते मण्डलकेऽपि [२२] । ऐक्यं पात्रतदधिष्ठानयोः [२३] । गोचरः शाखामर्कटानां न ततस्तात् अत्यनभिसंभवनीयत्वं भूमेः [२४] । न फलानां प(म ?)ञ्चपीठिकोत्संगपात्राधिष्ठानैः प्रतिग्रहप्रतीष्टेरन्याय्यत्वम् [२५] । निःश्रितैरेषां प्रत्यवेक्षणं तूष्णींभावेन [२६] । समप्रवृत्तिं चारकं रचयेयुः [२७] । न्याय्यं भिक्षोश्चारकत्वं प्रतिग्राहित्वस्य [२८] । घृततैलमधुफाणितघटांश्चारयंस्तृणपत्रप्रभृति[भि]श्चीवराणि व्यवदध्यात् [२९] । पृथक् चार्ये ज्येष्ठमध्यमकनीयसां करणम् [२३०] । पृथक्कृत्य सृष्टाग्राणां धारणम् [३१] । चारकस्याचार्य उपाध्यो ( ध्यायो ) वा प्रतिगृह्णीयात् [३२] । अप्राप्यप्राप्तावनन्तरस्थानः ( नम् ? ) [३३] । अनेकत्वे यावतामासनमुक्त्वा प्रतिग्रहीतुं शक्तिः [३४] । लुठितस्य शक्यतायां स्वयममुक्त्वा स्थानं ग्रहीतुमध्वंसः प्रतिग्राहस्य [३५] । स्पृष्टस्य च मक्षिकाकीटिकादिभिः [३६] । अन्येनास्य भुक्तस्य भिक्षुणा [३७] । ध्वंसकृन्मूषिकः [३८] । न प्रतिग्राहितस्प्रतिग्रहणमन्याय्यम् [३९] ।

॥ [ इति प्रतिग्राहितभुक्तिः ] ॥ ग्र. ॥ ३५ ॥

( ३६ ) अप्रतिग्राहितभुक्तौ ।

अप्रतिग्राहितायाम् [२४०] । उत्सृज्योदकदन्तकाष्ठमाहार्यस्य [४१] । मुखेनाभ्यवहारे [४२] । अनुत्तरकुरौ [४३] । प्रतीष्य(च्छे ?)द् ग्लानोऽनुपसम्पन्नेन भोजनमभाव उपसंपन्नस्य [४४] । भोजयेदनुपसंपन्नम् [४५] ।

॥ [ इति ] अप्रतिग्राहितभुक्तिः ॥ ३६ ॥

## ( ३७ ) प्रणीतविज्ञापने ।

क्षीरं दधि नवनीतं मत्स्यं मांसं वल्लूरा इति प्रणीतभोजनम् । एतत्कर्तृत्वं अज्ञातिगृहीता च दातुः । स्वविज्ञप्त्याभ्यवहृतौ विज्ञप्तौ कारितत्वे चास्या दुष्कृतस्य । अम्लानस्याकृतयथासुखप्रवारणस्य । तस्माल्लभमानस्यापि चेदन्यल्लूहं प्रणीतं वा समं प्रकृष्टं वा विज्ञप्तिः । अर्थताऽस्मिन् लूहस्य । यथासुखप्रवारणस्य भिक्षयादाय निर्गतेनं तूष्णीं तिष्ठतः प्रतिक्षिप्तो वा तत्किं याचस इति प्रश्नस्य ।

॥ [ इति ] प्रणीतविज्ञप्त(?ज्ञाप)नम् ॥ ३७ ॥

## ( ३८ ) सप्राणकोपभोगे ।

### ( क ) विभङ्गगतम् ।

स्वोपभोगार्थत्वे प्रवृत्तिप्रवर्त्तनयोः । वृत् । सप्राणितायाम् । उदकसर्पिस्तैलमधुफाणितक्षीरदधिनवनीतशुक्तशुलुकदधिमण्डकांजिकफलखाद्यकादेरुपयोज्यस्य । दृश्यैः । स्मृतौ । प्रतिप्राणि उपभोगः शरीर उपयोगः । तद्यथा स्नानं पानं दन्तकाष्ठविसर्जनं हस्तपादप्रक्षालनम् । उपकार्ये स उपयोगो य उपकरणेषु । अभ्यवहार्यपात्रचीवरस्थानदन्तधावनाग्निप्रभृतीनि शारीरोपकरणानि । तेषां मृद्गोमयरङ्गतृणकाष्ठप्रभृति । तेषु उपयोगस्तद्यथा निर्मार्दनं भावनं रञ्जनं सेकः सम्मार्ग उपलेपः । यूषमण्डयवागूनां करणम् । बन्धमोक्षयोरुदकमार्गस्य । काष्ठतृणयोः क्षेपाकर्षणोत्पाटनानाम् । अकपलसकादन्येन रोमविधादिना स्नानम् । तेनास्य हि रिक्तप्राणकधातावुदक इति प्रयोगः ।

॥ [ इति ] सप्राणकोपभोग°, विभङ्गगत° ॥

### ( ख ) क्षुद्रकादिगतम् ।

धारयेद् दण्डपोणम् । दत्तप्रत्येष्टचमाण्डि(?)त्रमाकाशावस्थाप्याकीर्यमाणपच्यजलप्र(?)प्रत्येष्टयपवित्यसंयमार्थं(?)लोहकण्डकस्त्रिदण्डस्तदाख्यः । स्नानार्थं जलस्यास्तृतेः परिश्रावणे दानम् । वालुकया गोमयेन वा । धारणपात्रस्य वा । मृत्ताम्र[ा]यसयोरन्यतरस्य । त्रिदण्डयष्टयामस्य बन्धनम् । संगृह्य रन्ध्रे सूत्रेण पूर्वस्य । उत्तरस्य श्लक्ष्णश्लक्ष्णलिकया । धारणमस्य । कम्पिकया मुहुर्मुहुरदानेस्त्र(?)परिश्रावणस्य पराघातः । अल्पप्रयत्नेन रव(?)णम् । धारणमस्य । मृदस्ताम्रस्य वा । कुम्भकृत्येतदघोनाडिषु पुष्कर(?कः)रवदन्तरविनरम् । नद्युत्सेषु शोधकत्वम् ।

परिश्रावणमुपस्थापयेत्[१३५]। खल्लमं ध(च?)र्मकरकं मोचनपट्टकं वा[१३६]। आत्युहायां कल्पिकजलस्य संभावदा(?)याश्च करककुण्डिकाभ्यामेतत् तद्वत्त्वम्[१३७]। न सान्तरेण सार्द्धम्[१३८]। तद्रूपश्चेत् प्रत्ययः क्षमयित्वा कार्यकरणेऽस्तित्वमास्तित्वम्[१३९]। तस्मात् तद्वत्त्वमत्र दाने प्रतिज्ञातेऽन्येन[१४०]। नैतज्जनपदचारिक(का?)यां वियुक्तौ दानाप्रतिज्ञाने संश्रयेत[१४१]। नाविघातकृदन्तरसंचारश्चारिका[१४२]। क्रोशपञ्चकस्यैत[द्व?]त्त्वम्[१४३]। न प्रमील्य गतस्य स्थाने तद्वत्त्वाभावे कामजः[१४४]। नैकेनानेकस्य तद्वत्त्वासंपत्तिरासंधात्[१४५]। नाविघातकृत्त्वं शीघ्रस्रोतसः[१४६]। क्रोशमनु गच्छतोऽस्यामनुस्रोतोऽनुसंहितं प्रत्यवेक्षणात् तेन प्रवृत्तिः[१४७]। सम्भेदश्चेदत्रोदकान्तरेण प्राक् ततः[१४८]। व्यामस्य परितः प्रत्यवेक्षितत्वम्[१४९]। चक्षुषा शुद्धत्वमुदकस्य शुद्धिः[१५०]। प्राकृतेन[१५१]। निष्कम्पत्वे प्रत्यवेक्षणमरजसः[१५२]। पूर्णत्वे घटस्य[१५३]। नातिक्रियासंख्यामत्र चिरतां कुर्यात्[१५४]। तूलिकया सुकरं प्राणकानां दर्शयनं श्लक्ष्णया[१५५]। नैनां कुमके त्वन्या किरेत्[१५६]। नान्याम्[१५७]। प्राणकपतनम्[१५८]। चेत् प्रदीपे तत्करणेनास्य प्रच्छादनम्[१५९]। पञ्जरं वंशविदलिकानां शुक्लवस्त्रस्य वेष्टितमभ्रपटलेन वा तदाख्यम्[१६०]। शवाक्षश्च[१६१]। आधकृतित्वा कर्परं वा घटादेश्छिद्रितम्[१६२]। न वालपाशेन सर्पं बध्नीयात्[१६३]। अच्छटाशब्दं कृत्वा भद्रमुखादर्शनपथे तिष्ठते वदेत्[१६४]। अस्थितावजपदकेन दण्डेन शनैः कुम्भे कुण्डके वा प्रक्षिप्य छिद्राणि कृत्वा मुखं पिधाय निष्कासनम्[१६५]। असंम(?प)त्तौ पट्टिकया लोठिकया मुरुचिकया वा रजु(ज्ज)पाशेन वा नतु(?दु)के वेष्टितेन ग्रीवायां बद्धा[१६६]। प्रक्षेपेऽप्येषां विनियोगः[१६७]। न दवे छोरयेत्[१६८]। आशयप्रवेश(?)तिष्ठेत्[१६९]। नडुके यूकानां स्थापनम्[१७०]। शुषिरे तस्य[१७१]। घाइले मत्कुणानाम्[१७२]। शीतले वा[१७३]। मोचनघटिकायाः पूर्वावतारणार्थं धारणम्[१७४]। तेनैव वा परिश्रावणेनावतारणम्[१७५]। मोचनं परिश्रावणस्य लमप्राणकापनीतानुपायः[१७६]। भावनं मलस्य[१७७]। शोष्य(?ष)णं यान्त्यानुपगतेः[१७८]। निष्पीडनस्य द्वयेऽप्यसिद्धुपकरत्वम्[१७९]। निरावद्यालंभप्रत्ययसंघपुद्गलपरिश्रावणप्रयणप्रत्ययेन प्रवृत्तिः[१८०]। आसूर्योदयात् गृहीतोदपानयोः प्रत्यवेक्षितानुवृत्तिः[१८१]। पादधावनिकां रिक्तामुच्छोच्य पूरयेत्[१८२]। उपस्थापयेदन्यभाण्डम्[१८३]। भाण्डगोपकस्य तद्गतः सांघिके व्यापारः[१८४]। नात्र दानग्रहणयोः नान्तर्भावः[१८५]। दानं गृहिणे याचितकत्वेन[१८६]। परिभुक्तस्य तत्सत्त्वे[१८७]। नानेन दानपतीनां विहारे देयत्वस्य नोक्तता नवस्य भिक्षवे निद्दे(?धे)यत्वेन[१८८]। भाण्डार्थे लयनस(स्य?) नियोजनम्[१८९]। पृथक्त्वेन मृचाम्रभाण्डिकयोर्निक्षेपः[१९०]। उपस्थापनं पानीयस्य[१९१]। न यत्र क्वचन स्थापनम्[१९२]। मण्डपस्य तदर्थं करणम्[१९३]। दक्षिणपश्चिमे विहारस्य पार्श्वेऽभ्यन्तरतः[१९४]। वातायनमोक्षेष्टकास्तरदानोदकभ्रम-

मोक्षद्वारकर्णकनाटकटस्दानम् । वंशस्य च परिश्रावणस्थापनार्थम् । काष्टम्मञ्जि(?मञ्चि?)कासु स्थापनम् । इष्टकपिण्डिकायां वा । आधारकेषु । चौक्यं पानीयभाण्डमापा(?प)रिभोगार्थान्(र्थं?) कुर्यात् । शुचि । पानीयञ्च पेयम् । नाकल्पिककरे[त?]द्धस्तचीवरेश्चारयेत् । कालेन कालमुदकभाण्डानामन्तःशोचनम् । गम्भीराणामुशीरकुर्चकेन परनिभङ्गुकर्नरकेन वा यष्टयामुपनिद्धेन । नातोऽस्म्भृत्नमामिषोपदेहस्य । शोषणश्च । तदा विघातार्थमपहत्वे(?)न । नि[ः]श्रयकरणीयानामुदकगतो व्यापारः ।

॥ [ इति ] सप्राणकजलसयद्धक्षुद्रकादिगत० ॥ ३८ ॥

( ३९ ) निपदने ।

प्रहृत्तार्यौन्मुखे वा । सन्निपाते । स्त्रीपुन्सयोः(?पुंसोः) । गृहित्वे । अन्यस्थानतायाम् । योग्यत्वे च । निरस्तत्वे संप्रयुक्तः । प्रत्यक्षकल्पेन निपदने ।

॥ [ इति ] सभोजने निपदनम् ॥ ३९ ॥

( ४० ) स्थाने ।

स्थाने रहःकल्पेन । सारणस्य । न चेद् भयवशात् । दुष्कृतस्यासंवेद्यसंवेद्यत्वे । अवधाने च स्थानान्तरे । गोचरान्तात् दृष्टेः स्थानान्तः । अन्तर्गततरं गनुज(ज्ञ)स्य । भिन्नतरं गृहान्तरस्य ।

॥ [ इति ] सभाजने स्थानम् ॥ ४० ॥

( ४१ ) अचेलदाने ।

स्त्रिया पुरुषस्य वा । उत्सृज्य ज्ञातिं प्रव्रजा(ज्या?)पेक्षं ग्लानं च । अनिर्दलिङ्गप्रव्रजितस्याचेलकस्य काये कायसम्बन्धे वा । खादनीयभोजनीययोः । स्वस्य तस्य च । उत्सृज्य पापकदृष्टिगताद् विवेचनार्थताम् । स्वयं दाने । अकल्पिकयोः दुष्कृतम् । दापने । संविभागे च ।

॥ [ इति ] अचेलदानम् ॥ ४१ ॥

( ४२ ) सेनादर्शने ।

युद्धाभिनन्दिसेनादर्शनार्थतया । उत्सृज्य राजदेवीकुमारामात्यभटबलाग्रनैगमजानपदोक्तिम् । अन्तरायोपपातशक्ततां च । प्रस्थापितस्य । उपविचारान्तातिक्रमे दृष्टौ ।

॥ [ इति ] सेनादर्शने [ प्रायश्चित्तिक ]म् ॥ ४२ ॥

( ४३ ) सेनावासे ।

विनैते तत्र रात्रिन्दिवद्वयपरिपूरेरूर्ध्वं वासे । अनिमित्तं च पूर्वत्रापि ।

॥ [ इति ] सेनावास० ॥ ४३ ॥

### (४४) युद्धाङ्गप्रत्यनुभवे ।

युद्धाङ्गानां कर्तृत्वम् [९३] । अनन्तरायवशगतस्य [९४] । समस्तव्यस्तानाम् [९५] । सज्जीकृतानाम् [९६] । मौले मौलस्य [९७] । दुष्कृतस्य प्रयुक्तौ [९८] । असज्जीकृतानाम् [९९] । उभयत्रापि दुष्कृतस्यैव [१००] । स्पृष्टिव्यूथनं प्रस्थाय दर्शनार्थमुपविचारान्तातिक्रमे दृष्टिरिति मूलानि [१] । न्यूनत्वमनुघतत्वे [२] । न हस्त्यश्वकुक्कुटलावकवर्चकस्त्रीपुरुषयुद्धादि कुर्यात् कारयेन्निरीक्षेत वा [३] ।

॥ [ इति ] युद्धाङ्गप्रत्यनुभवः ॥ ४४ ॥

### (४५) प्रहरणे ।

कलुषचित्ततया [४] । कायतन्निःसृष्टसम्बद्धैर्येन केनचिदन्ततः पादाङ्गुष्ठसर्षपतूलिक[ा]भिः प्रहृतौ [५] । भिक्षोः [६] । परस्य [७] । उत्तरेषु त्रिषु [८] । स्पृष्टो(ष्टौ?) [९] । प्रतिनिपात्यम् [११०] । अनिपाते दुष्कृतम् [११] । नान्यत्र प्रहर्त्तव्ये ऽन्यत्र प्रहरेत् [१२] । न स्तम्भे प्रहारं दद्यात् [१३] । न भित्तौ भूम्यां वृक्षेऽन्यत्र वा [१४] ।

॥ [ इति ] प्रहरणम् ॥ ४५ ॥

### (४६) अवगुरणे ।

प्रहारावगुरणे [१५] । प्रतिद्रव्यम् [१६] ।

॥ [ इति ] अवगुरणम् ॥ ४६ ॥

### (४७) अवद्यप्रतिच्छादने ।

पाराजयिकसंघावशेषयोरुत्सृज्यास्पर्शश्रामण्यब्रह्मचर्यान्तरायसंघक्षोभार्थकवशताम् [१७] । प्रतिच्छादने [१८] । अन्तेऽहोरात्रस्य [१९] । प्राग् दुष्कृतम् [१२०] । अन्यस्याश्रापत्तेः [२१] ।

॥ [ इति ] अवद्यप्रतिच्छादनम् ॥ ४७ ॥

### (४८) भक्तच्छेदकारणे ।

संचिन्त्य मुक्त्वा रोगप्रतिक्रियार्थतां गृही दातृभक्तच्छेदस्य कारणे [२२] ।

॥ [ इति ] भक्तच्छेदकारणम् ॥ ४८ ॥

### (४९) अग्निवृत्ते ।

न सिंहं स्पृशेत् [२३] । शास्तृधर्मसंघसब्रह्मचारिणां धर्म्यकरणीयतापेक्षा पात्ररंगकर्मणोश्च समयाधिष्ठानम् [२४] । अधितिष्ठेद् दीर्घम् [२५] । क्रीडायां चापरया चन्द्रसूर्यालातचक्रादिकरणतश्च [२६] । अग्निना [२७] । अनधिष्ठितसमयस्य अग्लान्यथशतार्थस्य स्पृष्टौ [२८] । स्वयभियोगतो वा [२९] । प्रज्वाल[न]निर्वापणस्पृष्टास्पृष्टेन्धनसमवधानयुक्तनिष्कर्षणाङ्गारसमावर्चननिष्कर्षणेषु [१३०] । अर्द्धस्तमितत्वं कुकूलस्य [३१] । ज्वालानां च [३२] । समवधाननिष्कर्षणे तत्रेन्धनस्या-

ग्यन्तरवृत्तम् । केशरोमास्थिनखखेटसंघाणकवान्तविरिक्तमुद्गमापतिलतैलमधुसर्पिषामर्द्धन्धनत्वम् । अन्यस्य करणीयेऽन्यस्येत्यधिष्ठानमर्द्धाधिष्ठानम् ।

॥ [इति] अग्निधृत्तम् ॥ ४९ ॥

(५०) छन्दप्रत्युद्धारे ।

भिक्षुरर्थार्थे कर्मणि । घृतस्य महदानास(?) प्रत्युद्धारार्थायां वापि ।

॥ [इति] छन्दप्रत्युद्धारः ॥ ५० ॥

(५१) [शयने] ।

नाचन्द्रसूर्यालोकवत्यवरकदेशे शयीत । मुक्त्वा ग्लान्यग्लानोपस्थानवशताम् । प्रायश्चित्तिकमत्रेत्येके । अर्द्धत्वमनिपत्तेः पृथक्त्वयश्वाह्वः । यच्छूपः (यः ?) परिवारित्तमगारपर्यन्तः । तद्वतत्वं संवद्धस्य तद् द्वारपार्श्वोपचारस्यागारभूतस्य । पुरान्तरस्य च तद्वद्द्वारस्यानन्तरस्य च । न सोपचारात् परस्य लयनमात्रात् पृथग्भूताध्यासितस्य । अर्द्धत्वं वृक्षमूलकुड्यशुशि(?सुषि,रवृत्त(?) मूलानाम् ।

[इति शयनप्रायश्चित्तिकम्] ॥ ५१ ॥

(५२) स्त्रीसहस्वप्ने ।

सगहनानां स्त्रीसहस्वप्ने । अध्वनोऽत्र कुक्कुटस्योत्पात्य निलयनेऽन्तरमभूतत्वम् । सर्वस्य सान्तरसंचारस्य निरनगारान्तरत्वे छदनस्यैकत्वम् । पृथक्त्वं स्वभागगतघनबन्ध(?)त्वे द्वारस्योपचारस्यापि । तद्वद्रक्षितत्वं भिक्षुणापत्तेः । गुप्तत्वं च स्वामिना मातृग्रामस्य । उद्धृतत्वं च निश्रयणेः पुरान्तरे । ह्रासोऽनगारत्वेऽन्यभूतात् ।

[इति स्त्रीसहस्वप्नम्] ॥ ५२ ॥

(५३) अनुपसम्पन्नसहस्वप्ने ।

अनुपसंपन्नेन सार्द्धमगारे तृतीयस्यां रात्रौ स्वप्ने । अन्ते । प्राग् दुष्कृतं निर्दोषमध्वपरिश्रान्तस्य क्लान्तौ । तथासान्तेऽपि । अकल्पिनि च भिक्षोः करणीये तत्संपादकेन सार्द्धं ग्लानस्य तदुपस्थायिनश्च । श्रामणेरेण च तद्वतः सन्निहिततायां तत्रावासे पापभिक्षोः कृतकुर्वंच विनाशप्रयत्नस्य । उपगतौ पश्चिमकालयोर्द्व(र्द्ध)योर्मासयोर्वर्तमानस्य । नोर्ध्वमस्य वस्तव्यत्वम् । अकार्यत्वं पूर्वोपगतेः । अरक्षत्वं प्राग् । नैषोऽनुपस्थापितं श्रामणेरमुपस्थापयेत् । सिद्धोपपातेनाध्वनि श्रामणेरमभिप्लुतं पुरतः कृत्वा गच्छेत् । बुभुक्षितश्चेत् सानुकालं दद्यादस्मै तदाहारम् । पुनश्चेद् वेलायां तदापि ।

॥ [इति] अनुपसम्पन्नैः सहस्वप्नः ॥ ५३ ॥

(५४) दृष्टिगतानुत्सर्गे ।

तथाहम्भगवतो धर्मदेशितमाजानामि यथा [ये अधर्माः संक्लेशिकाः] आन्तरायिका धर्मा उक्ता भगवतेति प्रतिपे(?से)व्यमाने नालमन्तरायायेत्यादि प्रवृत्तवचनतावसर्गे जैगुप्स्यमत एनं कुर्युः ज्ञापनेन [६९] ।

॥ [इति] दृष्टिगतानुत्सर्गः ॥ ५४ ॥

(५५) उत्क्षिप्तानुप्रवृत्तौ ।

तथा विदितप्रक्षिप्तस्याप्रतिकृततायां भिक्षोः [१७०] । उद्देशदाने [७१] । परिप्र(?पृ)च्छनिकायाः [७२] । सनिःश्रयस्य [७३] । अनुशासन्याः [७४] । अपवादस्य [७५] । आविष्करणे दृष्टेः [७६] । आसोप(?)संभोगे [७७] । उपस्थापनस्वीकृतौ [७८] । अगारे च सहस्रभे [७९] । अन्ते रात्रेः [१८०] । अन्यथा वासं सन्दने [८१] । मुक्त्वा ग्लान्यदृग्विवेचनगतेनार्थेन [८२] ।

॥ [इति] उत्क्षिप्तानुप्रवृत्तिः ॥ ५५ ॥

(५६) नाशितसंग्रहे ।

प्रवृत्ततद्वचनानुत्सर्गे श्रामणेरं नाशयेयुः [८३] । ज्ञप्तिचतुर्थस्य ते कर्मण इति पूर्वश्रोतरनाशनीयस्य ते इत्युपक्रमं ज्ञप्तिः कृता निःसृजेदमेवंरूपं पापकं दृष्टिगतं प्रथमा कर्मवाचना कृता द्वितीयेति प्रत्येतदन्तमस्मै भिक्षुणा श्रावयेयुः [८४] । अनारतानुत्तरं कुर्युः [८५] । नाशिततायां श्रमणोद्देशस्य [८६] ।

॥ [इति] नाशितसंग्रहः ॥ ५६ ॥

(५७) अरक्तवस्त्रोपभोगे ।

नीलया गैरिकेण वल्कलेनेत्यनुपरक्तस्य सत्रासस: [८७] । अन्ततः पात्रस्यक(?)स्थाविकापादचोडकायबन्धनानां प्रावरणादौ परिभोगे [८८] । न निकायान्तरीयस्य पुनः कल्पनीयत्वम् [८९] । नाच्छिन्नस्य गृहिणा [१९०] । न महारङ्गरक्तं प्रावृतिम्भजेत [९१] । नागारिकस्य [९२] । भजेद् विहाराभ्यन्तरे प्रतिच्छादितस्य काषायेण [९३] । साधारणत्वमध्वनि याचितप्रावरणस्य [९४] । सहायकैः भिक्षुश्रामणेरैः [९५] । एकत्वे वृद्धान्तदारस्य यावत्संभावनानुपरिदानम् [९६] । नानवच्छिन्नमपरतः प्रावृत्तं(?) चंक्रम्येत [९७] । अन्याक्रामेदुपनिमन्त्रितः पुण्यकामेन नवमाच्छिन्नदशात् पराहत्यानित्यतामनसिकारेण [९८] ।

॥ [इति] अरक्तवस्त्रोपभोगः ॥ ५७ ॥

(५८) उद्धर्पवस्तुगते ।

स्पृष्टो(?ष्टौ? ष्ट-) स्पर्शनयोः कर्तृरत्न(?र्तृत्व?)मस्वम् [९९] । तत्सम्मतं च [२००] । शस्त्रमेतत् संग्रामावचरं भाण्डं च गन्धर्वावचरम् [१] । श्राद्धं योग्यत्वमुपयोगाय मूलस्य [२] । दुष्कृतस्याप्राप्तम् [३] । मुक्त्वा स्वीकारानलुगतः तत्र द्रव्याविनाश-

चित्तस्य विहारतदुपचारगतम् । न तदुपेक्षेत । सप्ताष्टान् दिवसैनैतदुपविचारे प्रकुर्वन् (?) पांसुना चैमक्कुर्का छादयेत् । नासमुदितचिन्ना(ता?)य स्वाम्यहमिति ब्रुवते दद्यात् । अनागमेऽस्योर्द्ध(र्ध्वं?) सांघिके गञ्जाः [उ]पनिक्षिपेत् । आषष्ठमासपर्यन्तं धारयेत् । ऊर्ध्वमनागतौ यद् भूमौ बुद्धसांघिकयोर्लिंग्य तत्रोपयुक्तिः । अयोग्यत्वे क्रयणं योग्यस्य तेन स्थावरस्य । तदा चेत् स्वाम्यागच्छेदनुज्ञानमायाच्यानिच्छते दद्युः । वृद्धिं चेत् मृगयेदेतदेव न बहु मन्यसे यदस्माभिः परिपालितमिति ब्रूयुः । घटितविघ(द्ध?)तायां मण्यादेर्योग्यत्वम् । हर्षकटककेजू(यू)रहाराद्धीहारत्वविनिवेशे च । वीणावेणुवल्लरिमहतिसुघुषोपकानां सतन्त्रीकत्वे । वदत्ता(?)यां शङ्खभेरीपटहमुखानाम् । धनुषः सगुणत्वे । तत्त्वेशील्येकतो धारककुन्तडाभाणेऽर्द्धानाम् । शरनाराचार्द्धनाराचानां सफलत्वेः( त्वे ?) । सधातुकत्वे प्रतिमायाः । निर्धापमस्याः शास्तृसंज्ञामुपस्थाप्य । काचमणिपलालमालकाण्डवीणिकतलमड्डुकपिञ्जनकतुलिकाकण्डानामर्द्धत्वम् । अयोग्यत्वं सुवर्णपिण्डस्य । गोपयित्वोत्रासे गृहीत्वा वानुपरोधे स्वस्य सांघिकं स्तौपिकं च हिरण्यसुवर्णमपक्रमणम् । स्था(था?)द्धेन श्रामणेरेण वा । अभावे स्वयम् । खननमत्र । अपगते दानम् । उत्पाद्य तद्वत् । निर्दोषममानुपभवने पुण्यनिर्जातं चेदेषां रत्नमयं भूमिसोपानादि । भोजने च भाजनमसम्भवेऽन्यस्य । शयनासनं च निषादे । गच्छेद् यानेन । धर्मार्थवशतया । नाटोपनता । न जीर्णग्लानाभ्यामन्यः । निषीदेद् धर्मश्र[।]वणार्थं रत्नमये सिंहासने पराहत्यानित्यतामनसिकारेण । निवेशने चागारिकीयाणी(?नी)ति संप्रेक्ष्य तत्प्रज्ञप्तौ । सुवर्णखचितकर्णिकावृतेषु वस्त्रेषु । अत्र च मणिप्रत्युप्तेषु सुवर्णरूप्यखचितेषु प्रवेशयेयुरेतानि । नाकल्पिकत्वमुपस्थापितशास्तृसंज्ञानामागारिकश्रामणेराभावे बुद्धप्रतिष्ठ(ष्ठि?)तैर्धर्मार्थवशतया स्पृष्टौ । त(न ?)द्रव्यस्य च । नाभरणप्रावृत्तिं भजेत । धारयेत् मुद्रानम् ( द्रा ?) । अप्रात्ररणिकीम् । त्रपुताम्ररितीकजतुकाष्ठशैलमृद्दन्तशृङ्गेभ्यः । चिह्नं सांघिकायां( याः ?) मध्ये चक्रं पार्श्वयोर्मृगावधस्ताद् विहारस्वामिनो नाम । पैङ्गलिकायामस्थिसंकलाशिर[ः] कपालं वा । न फणिकया शिर[ः] प्रसाधयेत् । निदर्शनमेषा । नादर्शेन मुखं पश्येत् । उदकात् । अनापत्तिरुदकप्रत्यवेक्षणार्थतायां व्रणवलीपलितदर्शने पूर्वोत्तरनिमित्तोद्ग्रहणे । न त्र्यार्षं भजेत् । न रोचनाम्रक्षणम् । न गन्धैः । भजेत पादयोर्गन्धाङ्गददानं पुण्यार्थिनाम् । न तस्य पुरस्तो(?त उ)पनयेत् । नैभिर[ा]कः संघे सन्निपतेत् ।

न गृहिभ्यो धर्मं देशयेत् [६१] । न कुलान्युपसंक्रामेत [६२] । स्नानमन्ते भजेत [६३] । प्रतिगृह्णीतैनाम् [६४] । पुष्पमालां च [६५] । चैत्ये विनियोगः [६६] । श्रावकस्यापि [६७] । अनभिमतो दातुः शिरोन्ते पादान्ते वा [६८] । असम्मुखे द्वारस्य [६९] । भित्तौ [७०] । लम्बनं मालाद्याशून्यामत्रावतूसितायां कण्टके वा [७१] । चक्षुष्यं सुगन्धीति कालानुकालं घ्राणम् [७२] । न ब्रह्मसूत्रप्रावृतिं भजेत [७३] । न सूत्रकस्य [७४] । मूलग्राहौ चिकित्सार्थस्य भजेत यामे [७५] । न यत्र क्वचन छोरयेत् [७६] । सशेषं चेत चीवरकर्णके कुब्जके बन्धनम् [७७] । न चेत् स्तम्भशुषि(सुषि ?)रे कुड्यस्य वा निक्षेपः [७८] । न नृर्त(त्य ?)गीतवादित्रमाचरेत् [७९] । न शिक्षयेत् [८०] । नोपसंहरेत् [८१] । न दर्शनायोपसंक्रामेत् [८२] । न भिक्षुण्या नृत्तं (त्यं ?) कारयेत् [८३] । कुर्यात् शास्तृगुणसंकीर्त्तने त्रिदण्डकदाने च स्वरगुप्तिम् [८४] । शिक्षेतैनां प्रतिगुप्तिप्रदेशे [८५] । न संचग्घनसंक्रीडनसंकिलिकिलायनौद्धत्यद्रवकायताद्यानि कुर्यात् [८६] । नौद्धत्याभिप्रायः कायवाचो (चौ ?) विकुर्वीत [८७] । भागशो व्यपकेतसंसर्गः [८८] । न भाजन(नं) संचारकेनाभ्यवहृतं कुर्यात् [८९] । न वतंसकं ग्रथ्नीयात् [९०] । नाम(ध)मुद्ध्येत [९१] । न लालाटिक[ा]मनुप्रयच्छेत् [९२] । न समावस्थायां वा(या)चेत [९३] । न जघनप्लवने कुर्यात् [९४] । नोरुबाहुमत्स्यपरिवर्तकं परिवर्तेत [९५] । न जलशिक्यिकां विध्येत [९६] । न जलमण्डूकमेरिके वादयेत् [९७] । न [उ]दकपिच्छिलिकां पिच्छिलेत् [९८] । न हस्तिकुञ्चिताश्वहेषितर्षभगर्जितमयूरकोकिलरुतानि कुर्यात् [९९] । न मुखशंखडुड्डुकभेरीवादनम् [१००] ।

॥ [ इति ] उद्घर्षवस्तुगतम् ॥ ५८ ॥

(५९) स्नाने ।

शिष्टादध्यर्धतो ग्रीष्मस्य पूर्वतश्च वर्षाणां मासात् [१] । अधीवरद्वितीयस्य लब्धौ यद्विधस्य [२] । अनुद्धूतस्य वातेन [३] । चीवरकर्णकिरणं तत्पर्यन्तः [४] । अनवधृष्टस्य [५] । अस्य बिन्दुद्वयनिपात[ः] काये [६] । अन्यदा पञ्चदशादस्नानदिवसादर्वाक्स्नाने [७] । अभिषेकेण चावगाहनेन वा [८] । नाभिप्राप्तौ [९] । पुरस्ताद् दुष्कृतम् [१०] । सर्वत्र समयेष्वनधिष्ठाने [११] । नार्थान्तरपरो जलानुभवः स्नानम् [१२] । तस्मादुत्तरणं संचेतितया मूर्छितसेकेऽध्वनापत्तिः [१३] । मन्येताश्मापरान्तकेऽन्वस्याभावम् [१४] । न संभवे परस्योत्स्नायकल्पं संश्रयेत [१५] ।

॥ [ इति ] स्नानप्रायश्चित्तिकम् ॥ ५९ ॥

(६०) तिर्यग्वधे ।

वधकचित्तेन तिरश्चः प्रहृतौ [१] । तदाऽन्यदा वा तन्निदानं मृतौ दुष्कृतत्वं सत्त्वाभिग्रहस्य [२] ।

॥ [ इति ] तिर्यग्वधः ॥ ६० ॥

(६१) कौकृत्योपसंहारे।

न त्वमुपसम्पन्नः पाराजयिकामसापन्न इत्याद्यर्थ(र्थं) भिक्षुर्येन कौकृत्योपसंहृतौ भिक्षोः ॰॰। अस्पर्शोत्पादनचित्तेन ॰॰। हास्येनापि ॰॰। अनुत्पत्तावपि ॰॰। कौकृत्यस्य ॰॰। अन्येन दुष्कृतम् ॰॰।

॥ [ इति ] कौकृत्योपसंहारः ॥ ६१ ॥

(६२) प्रतोदने।

भिक्षोः ॰॰। अङ्गुलिमुष्टरत्निस्कन्धशीर्षपार्श्वपृष्ठकट्यूरुजंघाजानुपादाङ्गुष्ठादिभिः प्रतोदनतः स्पृष्टौ विकरणचित्तेन ॰॰। तस्माद् व्रणमशापिल्प(?शक)तिलकरोमावर्तादि दर्शनेनापत्तिः ॰॰। एके वानेकत्वे निपात्यस्य ॰॰।

॥ [ इति ] प्रतोदनप्रायश्चित्तिकम् ॥ ६२ ॥

(६४) द्रवहर्षणे।

जलविषयक्रियानुष्ठाने ॰॰। अनतीर्णस्य निमज्जनोन्मज्जनतीरान्तरसंचारानुप्रतिस्रोतोव्यायामजलभेरिकामण्डूकनादनशिथिलकावेधचक्रनाडवज्जकक्षूपकानर्त्तकरणलेखाकर्षकाना मौलम् ॰॰। टिप्पकादानस्य दुष्कृतम् ॰॰। गोलघटवर्धनी शरावे ॰॰। क्षोलस्पयूपमण्डे च सत्यामपि वक्षतायाम् ॰॰। अजलहर्षणे च ॰॰। तद्वत् तद्भूतकारणम् ॰॰। औद्धत्यरतप्रत्यनुभवच्छन्देन ॰॰। तस्मात् प्रह्लादनच्छन्देनावतारणादाननापत्तिः ॰॰। तरणशिक्षायां तिर्यगायतं वा व्यायामे ॰॰। जिह्लादयिषया तत्रेषु लेखकर्षणे ॰॰।

॥ [ इति ] द्रवहर्षणम् ॥ ६४ ॥

(६५) स्त्रीसहशय्यायाम्।

मातृग्रामेण सार्द्धमेकस्मिन्नगारे भिद्वारकान्तौ निशयां(या?) ॰॰। अन्तः ॰॰। प्राग् दुष्कृतम् ॰॰। कुकुटिप्रमाणमेतद् कृत्वेऽन्तः ॰॰।

॥ [ इति ] स्त्रीसहशय्याप्राय० ॥ ६५ ॥

(६६) भीषणे।

हासप्रेक्षयापि भीषणच्छन्देन भयनिमित्तोपसंहारपूर्वकं विज्ञपने ॰॰। भयंकरस्थानुकोऽयमिति भिक्षोः परेणाप्यनुत्पत्तावपि भयस्य ॰॰। मौलमन्सन(मन?) आपस्य ॰॰। तद् यथा प्रेतपिशाचकुम्भाण्डकटपूतनत्वाख्यापिनां कीटनं(?) कीटकीटानामङ्गारिकावर्णानां दग्धस्थूणानिभानां रूपाणाम् ॰॰। सिंहव्याघ्रद्वीपिक्रोकपटारुभ्रष्टोते(?)काशब्दानाम् ॰॰। उच्चारप्रस्रावस्रवतकटगन्धानाम् ॰॰। किटकिलिंजकुतपस्पर्शानाम् ॰॰। मन आपस्य दुष्कृतम् ॰॰। तद्यथा देवनागगन्धर्वयक्षकिन्नरमहोरगत्वख्यापिनाम् ॰॰। घनिश्रेष्ठिसार्थवाहादिरूपाणाम् ॰॰। वीणादिशब्दानाम् ॰॰। अगुरुचन्दनकुंकुमतमालपत्रगन्धानाम् ॰॰।

प्रह्वपटप्रावरांशुकदुकूलकोट्टम्बकस्पर्शनाम् (१५५) । उत्सृष्टसंवेजनार्थताम् (१५६) । तस्मात् संवेजनार्थं नरकतिर्यक्प्रेतमनुष्यकथादावन[ा]पत्तिः (१५७) ।

॥ [इति] भीषणम् ॥ ६६ ॥

(६७) गोपने ।

इदं प्रव्रज्यासंलकपात्रचीवरपोणिकाकंसिकाकायबन्धनादिश्रामणकजीवितपरिस्कारनिर्दाने (१५८) । निर्दापने च (१५९) । उत्सृष्टहितकामतया (१६०) ।

॥ [इति] गोपनम् ॥ ६७ ॥

(६८) दत्तोपजीवने ।

दत्तस्य भिक्षोर्निर्देयं चीवरस्य विना तदनुज्ञानं परिभोगे (१६१) । न चेदस्य तन्निदानं प्रीतेस्सम्भावनम् (१६२) ।

॥ [इति] दत्तोपजीवनम् ॥ ६८ ॥

(६९) अस्वाख्याने ।

ध्वंसतत्त्छन्देन भिक्षोर्विनिधायां संज्ञ संघावशेषापतनस्य विशस्तौ (१६३) । लेशेनापि (१६४) ।

॥ [इति] अस्वाख्यानप्रायश्चित्तिकम् ॥ ६९ ॥

(७०) स्त्रीसहगमने ।

कामतोऽध्वन्यूढौ (१६५) । प्रतिक्रोशम् (१६६) । प्रतितदर्द्धं दुष्कृतस्य (१६७) । उत्सृज्यातियात्र[य]न्तीम् (१६८) । नष्टश्वे(श्वी?)नमध्वनोऽध्वन्यवतारयन्तीम् (१६९) । अशक्तस्य वा निर्वोढुम् (१७०) ।

॥ [इति] स्त्रीसहगमनम् ॥ ७० ॥

(७१) स्तेयसहगमने ।

ग्रामघातकैश्चौरैः शुल्कभञ्जकैर्वा वणिग्भिः (१७१) । कार्पटिकैः स्तेयप्रव्रजितैः दुष्कृतम् (१७२) ।

॥ [इति] स्तेयसहगमनम् ॥ ७१ ॥

(७२) ऊनोपसंपादने ।

ऊनविंशतिवर्षतायामुपसंपाद्यस्य (१७३) । उपाध्यायत्वेनोपसंपादने (१७४) । नासावेनं पूर्णतां न पृच्छेत् (१७५) । नान्ये (१७६) । नानि(वि?)ज्ञायैनामुपसंपादयेयुः (१७७) । सर्वथा परिपूर्वण(र्ण?)विंशतेरुपसंपा(प?)दो रूढिः (१७८) । इतरस्य परिपूर्णसंज्ञतायाम् (१७९) । अमत्यास्ति(तिम?)तिविमतिषु च (१८०) । ज्ञाने च तद्ध्वंसः (१८१) । न चेददः मासपूरेः (१८२) । अपि गर्भाधिकमासकैः सावर्धं(?) (१८३) ।

॥ [इति] ऊनोपसंपादनम् ॥ ७२ ॥

(७३) भूम्युद्घाते ।

खननखाननयोः (१८४) । मृद्भुवः (१८५) । मुक्त्वा चतुरङ्गुलमात्रकीलकनिखननं

नवकर्मिकस्य नवनप्रयोगेनासन्निहितकल्पकारस्य [७] । ज्ञातिक(?)चेत् मौलम् [८] । न चेद् दुष्कृतम् [९] । त्रीन् मासान् पर्युषितासंहतिः पूर्णा [१०] । धृतिकान्तारं चेत् [११] । षडन्यदा [१२] । नाभूत्वं(?)कन्यायां मन्येत [१३] । प्रभूत्वे(ते?)न समुदायेषु लक्षणानां प्रमाणकल्पम् [१४] । तस्मात् कार्त्स्न्यमेव स न्यूनान्यत्र धृतायाम् [१५] । नष्टतादृग्धत्वे [१६] । अर्द्धत्वं नष्टस्य [१७] । घटितकानां न पृथिवीपर्पटककूलकन्यातक्षेपानाम् [१८] । गडकवालुकाय[ा]धिक्ये [ए]च [१९] । क्रियाणां च [२०] । कीलोत्पाटनलेखकर्षणमृत्कर्णकार्पिगोमयोत्पाटनपंकाकम्पनतक्षप्रगोलाद्युत्पाटनलोणिकाशातनात्मिकानाम् [२१] । विगोपनमतेरनैतत् [२२] । तस्माद् गणनन्यसनाद्यभिप्रायस्यानापत्तिः [२३] ।

॥ [ इति ] भूम्युद्घातः ॥ ७३ ॥

( ७४ ) प्रवारितार्थातिसेवायाम् ।

नातियाचेत [१] । युक्तमनारोचितकालस्य तदसंभावनायां प्रतीष्टभोजनगृहोपसंक्रमणम् [२] । उद्योजनं च परिवेषणेऽतिपत्तौ कालस्य [३] । न तरं व्यजनस्याद्रियेत [४] । स्त्रीदूषांत् प्रत्येकप्रवारणाम् [५] । सप्रवारणेऽपि संघे [६] । सर्वकालं च [७] । विना मर्यादास्थापनेन प्रवारितवतोऽन्यथा पौनःपुन्येनात्यर्थतया चोर्द्धमकृतप्रवारणात् चतुर्थमासपरिसमाप्तेरूर्द्ध्वं प्रग्राह्याभ्यवहर्ता [८] । विज्ञप्तौ दुष्कृतम् [९] । अनापत्तिः ग्लान्ये [१०] । ज्ञातो(?)च [११] । पृथक्त्वं पूर्वस्य विभ्रमात् [१२] । अप्रवारितदोषकारित्वं तस्य [१३] । पुरस्तादपि येन न प्रवारितः [१४] ।

॥ [ इति ] प्रवारितार्थातिसेवा ॥ ७४ ॥

( ७५ ) शिक्षोपसंहारप्रतिक्षेपे ।

अभिज्ञातायाम् [१] । आख्यातुः [२] । शिक्षायाम् [३] । असान्ते शिक्षितस्य मि(?)त्याख्या दयमानायामुद्देशेन वा भिक्षूणां न शिक्षिष्यामीत्येवत् कारणभावेन निवेदयितुरज्ञतामुत्थापयतो वचनस्योदाहर्ता [४] । सौत्र्यां दुष्कृतस्य [५] ।

॥ [ इति ] शिक्षोपसंहारप्रतिक्षेपः ॥ ७५ ॥

( ७६ ) उपश्रवगते ।

भिक्षोरधिकरणसंप्रधारणस्य भिक्षुभिरुपश्रुत्यर्थमुत्सृज्योपशमनच्छन्देनावधाने [१] । प्रतिसंवेदनायां शब्दस्य दुष्कृतम् [२] । अर्थस्य मौलम् [३] । क्षो(?)पकरणग्राह्ये(?)ण चेत् [४] । अर्थान्तरवशायामुपश्लिष्टो चेतनादूर्ध्वंस्पदच्छटोत्कासनशब्दादिभिरचेतयतो न चेत् मुग्धः शमार्थी वा नियतमावृतायां पातः [५] । न कलिमुपोद्वलयेत् [६] । नोपशृणुयात् नैनं कुर्वन्तमनुपरिवार्त्य तिष्ठेत् [७] । नोपशान्त्यै न प्रयतेत [८] ।

॥ [ इति ] उपश्रवगतम् ॥ ७६ ॥

( ७७ ) सामग्रीभङ्गे ।

ज्ञप्त्यादिकर्मणि संनिपतितस्थानवलोक्य भिक्षुं प्रक्रान्तौ श्रवणोपविचारातिक्रमे मूलम् [१३०] । पुरस्ताद् दुष्कृतम् [३१] । विनार्थेन युक्तेनार्थेनापक्रान्तौ [३२] । कृतत्वे क्षेमः [३३] । अधर्म्येऽर्थे [illegible] कर्मणः [३४] । श्रवणदेशानतिक्रमेच्छायामनापत्तिः [३५] ।

॥ [ इति ] स[ा]मग्रीभङ्गः ॥ ७७ ॥

( ७८ ) अनादरवृत्ते ।

स्थानगमनशयनासनविहारग्रहणभीप(?)तद्विपर्ययादेरुपनीतस्यार्थस्यानादराद् विना धर्म्यसंज्ञप्तिदाने व्यतिक्रान्तौ [३६] । भिक्षुसंघेन मौलम् [३७] । आचार्योपाध्यायैर्दुष्कृतम् [३८] । अधर्म्यत्वे ज्ञप्ते तत्त्वं कथावपातनस्य [३९] । मुखं संघस्य तद्व्यवहारकः [१४०] । संघवद् बुद्धः [४१] । न राजार्हत्संघस्थविराणामाज्ञां कोपयेत् [४२] ।

॥ [ इति ] अनादरवृत्तम् ॥ ७८ ॥

( ७९ ) मद्यपाने ।

पाने मदनीयस्य [४३] । च्युतिरस्य तत्त्वात् क्वाथे [४४] । विद्यते खोलवकासभक्षणे तत्प्रवेशः [४५] । अर्हत्त्वं किण्वपिण्डिकायाम् [४६] । मदनीयानां मूलगण्डपत्रपुष्पफलानां मद्यगन्धरसानां वा मदयितॄणां पेयानाम् [४७] । निर्दोषो वर्णमात्रेण मद्यस्य सदृशम् [४८] । प्रयोगवद् गण्डूषधारणपात्रभक्षणे [४९] । ग्लान्येनापत्तिः [१५०] ।

॥ [ इति ] मद्यपानम् ॥ ७९ ॥

( ८० ) अकालचर्यायाम् ।

अकालतायाम् [५१] । अनवलोकितसद्भिक्षोः [५२] । ग्रामप्रवेशे [५३] । न चेद्-त्यात्ययिककार्यसन्निपातः [५४] । अन्यत्र सञ्चारेऽत्र दुष्कृतम् [५५] । अभावेऽत्र भिक्षोस्तद्वद् भिक्षुणी [५६] । अस्याः श्रामणेरः [५७] । अस्य शिक्षमाणा [५८] । तस्याः श्रामणेरी [५९] । असत्यमवोचुः [१६०] । सीमान्तरस्थोत्क्षिप्तान्यपक्षाणां च [६१] । ऋद्ध्या त्वनापत्तिः [६२] ।

॥ [ इति ] अकालचर्या ॥ ८० ॥

( ८१ ) कुलचर्यायाम् ।

चतुर्थादायकाले कुलोपक्रसंक्रमणे [६३] । तन्मुखिकया च संघोपनिमन्त्रणेनासदनागमनवशात् परिवेषोऽतिपात्य इत्यपरिप्राप्य दातरि तृतीयप्रभृतौ [६४] ।

॥ [ इति ] कुलचर्या ॥ ८१ ॥

( ८२ ) राजकुलरात्रिचर्यायाम् ।

अप्रमीतत्वे [६५] । अन्त्याहरणस्यैतदत्रानुद्गतत्वम् [६६] । अन्तःपुरनिवासस्थान-

सम्बद्धतायाम् । अतदा प्रस्तुनायापि । प्रतिरात्रि । तत्कीलोपविचारान्तोऽतदादिः । एवं राजकुलनगरयोः । राजकुलस्थानेन च । नागरेण दुष्कृतम् । तदर्थता चेत् । द्वितीयं चेदत्रात्ययम् । न चेद् राजदेविकुमारामात्यान्तरायविनयननशेन । नानुश्राव्य राजकुलं प्रविशेत् ।

॥ [ इति ] राजकुलपरिचर्या ॥ ८२ ॥

( ८३ ) शिक्षापदद्रव्यताध्याचारे ।

वर्त्तमाने प्रातिमोक्षोद्देशेऽनुभूततद्व्यासंविग्नेन मनसा संप्रति मया ज्ञातमयमप्यत्र धर्मो विद्यत इत्यस्योक्तौ । अन्यव्यञ्जनेनोद्देशे साधारणीं प्रति दुष्कृतम् । मैत्र्यां च नोक्ता मापमाणायाम् । अनापत्तिरसाधारणी । असत्कृत्य प्रातिमोक्षोद्देशश्रुतिमुपनयन्तं संवेजयेयुः ।

॥ [ इति ] शिक्षापदद्रव्यताध्याचारः ॥ ८३ ॥

( ८४ ) सूचीगृहकसंपादने ।

दन्तास्थिविषाणमयसूचीगृहककरणकारणम् । कृतलाभपरिभोगयोरनापत्तिः । नापृष्टाभिज्ञता देशनां प्रतिगृह्णीयात् । अदेशितत्वमभिज्ञा चेत् । उत्तरेऽप्येतत् पञ्चप्रच्छेदोपसंहितम् । उद्दा(?)लेन द्वितीये ।

॥ [ इति ] सूचीगृहकसंपादनम् ॥ ८४ ॥

( ८५ ) पादकसंपादने ।

न विकटपादिकायां खट्वायां शयीत । न शय्यास्थानगतमश्वानुपहिते प्रदेशे पादौ प्रक्षालयेत् । सन्निहितपदत्राणः । अन्यश्च मुक्त्वा शिरः पादान्तौ । नोच्चशयनमहाशयने निषीदेन्निपद्येत । कुर्वीतासम्भवेऽन्यस्य पूर्वमन्तर्गृहे । कल्पेत सप्रतिपादके शय्याम् । न पीठातिपीठे निषीदेत् । प्रमाणादूर्ध्वं करणकारणे । परेषु च द्वितीयात् त्रिषु । मञ्चपीठयोः सांघिकयोः । उत्तरे च । पादकानां । हस्त एष माटनिकाप्रदेशवर्ज्यानां प्रमाणम् । सौगतस्तृतीये । उत्तरेषु च ।

॥ [ इति ] पादकसंपादनम् ॥ ८५ ॥

( ८६ ) अवनाहे ।

तूलेनोपनाहे । पञ्च तूलानि शाल्मलमार्कं कार्शमयं वौकमैरकं च ।

॥ [ इति ] अवनाहः ॥ ८६ ॥

( ८७ ) निषदनगते ।

निषदनस्य प्रमाणमस्य दैर्घ्यस्य हस्तत्रयम् । अध्यर्द्धोचोर्ध्वमकारयतः ।

विस्तारस्य हस्तद्वयं पञ्चाङ्गुलयः । दुष्कृतमस्य न्यूनस्याधिष्ठानम् । उत्तरस्य च द्वयस्य ।

॥ [इति] निषदनगतम् ॥ ८७ ॥

(८८) कण्डूप्रतिच्छादने ।

कण्डूप्रतिच्छादनस्य । षट्कं हस्तानां त्रयम् ।

॥ [इति] कण्डूप्रतिच्छादनगतम् ॥ ८८ ॥

(८९) वर्षाशाट्याम् ।

वर्षापां(शा)ट्याः । नवकं त्रयमष्टाङ्गुलयः ।

॥ [इति] वर्षाशाटीगतम् ॥ ८९ ॥

(९०) सुगतचीवरे ।

पञ्चत्रिकं शास्तुः स्वहस्तेन चीवरम् । तत्प्रमाणस्याततं त(ति?)नोद्धं वा चीवरस्य करणकारणे । नैतद् धारयेत् ।

॥ [इति] सुगतचीवरगतम् ॥ ९० ॥

॥ शुद्धप्रायश्चित्तिकानि समाप्तानि ॥

## § ५, प्रातिदेशनीयम् ।

अज्ञातिकायाम् । भिक्षुण्याः । स्वप्रतिपादितसर्वापरिक्षेपेण स्वयं ग्रामस्थेन प्रतिगृह्य खादनीय-भोजनीयस्याभ्यवहारे । न वर्षकस्य ग्राम्यत्वम् । न भिक्ष्वावासस्य । अर्द्धत्वमाकाशस्य । नासन्निधौ निक्षेप्तुरादानं निक्षिप्तस्य तस्मात् ।

॥ [इति] भिक्षुणीपिण्डकग्रहणं नाम प्रथमं प्रातिदेशनीयम् ॥ १ ॥

खाद्यमिह देहि पानकं भोजनं भूयः चेत्यादि तस्मिन् भिक्ष्वन्तरे वा व्यपदेशप्रवृत्तभिक्षुण्यवस्थापनकर्तृ । न चेत् तन्मुखिकया तज्जातिना वा निमन्त्रणकम् । उत्सृज्य तन्तृव्यपदेशमदत्तदापनं च । आगमयस्व तावद् भगिनि यावद् भिक्षवो भुञ्जते इत्यनाज्ञप्तायां तस्यां भिक्षुणा येन केनचित् सहभुजा पितृप्रभृतिभिक्षुनिमन्त्रणकमुक्तौ । कुले । उपचारप्राप्ते चेद् सावचनस्य मौल्याः । न चेद् दुष्कृतस्य । तता (तोऽ?) ज्ञप्तायां व्यवस्थापनम् । तस्मात् प्रश्नायौत्सुक्यमापद्येत । वृद्धाभवृत्तावत्र नवकः प्रवर्तेत ।

॥ [इति] पङ्क्ति(क्ति?) वैषम्यवादानधारितत्वे भुक्तिर्द्वितीयं प्रातिदेशनीयम् ॥ २ ॥

श्राद्धस्य विघातश्चेदस्य दाने कुलशिक्षासंवृतिं दद्युः । अज्ञप्त्या प्रतिप्रश्रम्भणं च । इत्येतदश्रितं बुद्ध्वा निवेशनगमनासनपरिभोगधर्मदेशनानि

कुर्यात् । न रिक्तपात्रः प्रविशेत् । दद्यादस्य याचमानेभ्यो बालेभ्यः पिण्डपात्रात् पूपिकामसकलाम् । अर्थिनि प्रतिप्रश्रम्भणम् । दत्ताशिक्षासंवृतेः कुलात् प्राकृतद्यानादनिमन्त्रितश्च प्रतिगृह्य खादनीयभोजनीययोरुत्सृज्य फकटिकामूलकहरितकमविघात्यभ्यवहृतौ ।

॥ [ इति ] कुलशिक्षाभङ्गप्रवृत्तिः तृतीयं प्रातिदेशनीयम् ॥ ३ ॥

सम्मन्येरन् वनप्रातिसंवेदकः भिक्षुः । अर्धयोजनमसौ समन्ततः प्रत्यवेक्षेत । सभयतायां धूमं कुर्यात् । पताक[ां] उत्स्र(च्छ्?)येत् । पश्चैमङ्कुकानि मार्गे स्थापयेत् । दद्युरस्मै सत्यार्थिकत्वे पुरोभक्तिकाम् । सहायकः । वृत् । अप्रतिसंवेदिततायां वनस्य । अरण्ये बहिरारामस्य प्रतिगृह्य खादनीयभोजनीयं चाभ्यवहरेत् । अर्धक्रुत्वं दक्षासम्वादे । अन्यत्र च भयस्थानाद् वर्तमानतायाम् ।

॥ [ इति ] वनविषयगतं चतुर्थं प्रातिदेशनीयम् ॥ ४ ॥

॥ समाप्तानि च प्रातिदेशनीयानि ॥

ॐ

## §६, क्षुद्रशिक्षापदानि ।

तथा निवसनं निवसीत यथा परिमण्डलं संस्थितं स्यात् । न चात्युत्कृष्टञ्चात्यपकृष्टम् । नांशेन शुण्डावलम्बितम् । नोद्धतम् । न फणवत् प्रत्यागतम् । न सम्वर्तिकया स्थितम् । तथा चीवरं प्रावृण्वीत यथाऽस्यार्धत्रयं स्यात् । सुसंवृतोऽन्तर्गृहं गच्छेत् । सुप्रतिच्छन्नोऽल्पशब्दोऽनुत्क्षिप्तचक्षुः युगमात्रदर्शी । नोद्गुण्ठिकयाक्रतिकया नोत्क्षिप्तिकया । न वितस्तिकया । न पर्यस्तिकया । नोत्टङ्किकया । नोजङ्घिकया । नो लङ्घिकया । नोत्कुटुकिकया । न स्तम्भाकृता । न कायप्रचालकम् । न बाहुप्रचालकम् । न शीर्षप्रचालकम् । नांसे ढौकिकया । न हस्तसंसाग्नि(लि?)कया । नात्रानलुज्ञाता त आसने निपीदेत । नाप्रत्यवेक्ष्य । न सर्वकायं समवधाय । न सक्थिनि सक्थि । न गुल्फे गुल्फम् । न संक्षिप्य पादौ । न विक्षिप्य । न विडङ्गिकया । न करे कपोलं दत्त्वा । न प्रतिपुटकमासनमुत्सर्पयेत् । सर्वे सत्कृत्य पिण्डपातं प्रतिगृह्णीयात् । न समतित्तिकम् । समसूपिकम् । सावदानम् । नानागते खादनीये भोजनीये पात्रमुपनामयेत् । नोपर्यस्य धारयेत् । सत्कृत्य पिण्डपातं भुञ्जीत । नातिक्षुद्रकैरालोपैः । नातिमहद्भिः । नानागत आलोप मुखद्वारं[वि]-

वृणीत । न भूयस्कामतयौदनेन सूपिकं सूपिकेन चौदनं प्रतिच्छादयेत् । नचुचुकारम् । न थुत्थुकारम् । न सुस्सुकारम् । न सालोपेन मुखेन वाचं निश्चारयेत् । न सित्थपृथक्कारं । नात्रर्णकारम् । न गल्लापहारम् । न कवडच्छेदम् । न जिह्वास्फोटनिश्चारं । न स्तूपाकृत्यवमर्दम् । न हस्तपात्रावलेहसनधून(?)संतोलम् । पात्रसंज्ञी । नात्र्यानप्रेक्ष्यन्तरिकस्य भिक्षोः पात्रमवलोकयेत् । न सामिषेण पाणिनोदकस्थालकं प्रतिगृह्णीयात् । न सामिषेणोदकेनान्तरिकं भिक्षुं सिञ्चेत् । नैतदन्तर्गृहे छोरयेदनवलोक्य गृहपतिम् । न पात्रेण विघसं छोरयेत् । त्रिः प्रक्षाल्य पात्रमार्षिभिर्गाथाभिरभिमन्त्र(न्त्र्य?)पादोदकं दद्यात् । नानास्तीर्णे पृथिवीप्रदेशे पात्रं स्थापयेत् । नोत्थितो निर्मादयेत् । नास्यैतदुभयमतटो(?) कुर्यात् । न प्रपातेन प्राग्भारेण न चतुष्पथे । नानुश्रो(स्रो ?)तोनेन नद्याहार्यहारिण्याः पानीयं गृह्णीयात् । प्राशुचारप्रस्रावादग्लानाय । तत्राग्लानः । नोत्थितो निषण्णाय धर्मं देशयेत् । न निषण्णो निपन्नाय । न नीचतरासने निषण्ण उच्चतरके निषण्णाय । हीनप्रणीततोऽप्येते । न पृष्ठतो गच्छन् पुरतो गच्छनेते(?) । नोत्पथेन पथम् । नोद्ग्रन्थिकादिकृताय । न हस्त्यश्वयानशिबिकामश्वपादुकारूढाय । न खोलामौलपुष्णीषवेष्टितमालाशिरसे । न छत्रदण्डशस्त्रखड्गायुधपाणये । न सन्नद्धाय । नोत्थित उच्चारप्रस्रावं कुर्यात् । न हरिते पृथिवीप्रदेशे । न छोरयेत् । खेटसिंघानकवान्तं रिक्तञ्च । नोदके । न पुरुषप्रमादूर्ध्वं वृक्षस्याधिरोहेदन्यत्रापदः ।

अथ भिक्षुणीविभंगः । पाराजयिकम् ।

आगापत्तियोगे वचनाद् भिक्षुण्याम् । चतुष्टयं स्वीकारे । चक्षुर्जान्वन्तरालेन । स्पर्शस्य । पुंसः । मैथुनरागेन । अङ्गान्तरेण । स्थूलम् । ह्रासोऽन्येन चेतसा । पुंसश्चेत् तदानीं तत्र विज्ञायमानं तथैतत् । न चित्ततोऽपि । अनापत्तिरस्वीकृतौ । अदुष्टं पुंस्पर्शनम् । न बालमप्यन्यत्र स्पृशेत् । प्रतिबलत्वे सेवायां पुंस[:]कामोपसंहिते । तद्भवार्थपरिज्ञाने चाचि परिपूर्णकारित्वम् ।

॥ [ इति ] स्पर्शपाराजयिकम् ॥ १ ॥

पञ्चरोपनिक्षेपे । रक्तया । प्रत्युपस्थितं सेवायां रक्तं तस्यां पुमांसं तत्प्राप्यतायाम् । औद्धत्यस्य रक्तेन सार्द्धं रक्तया करणे स्थूलम् । द्रव्यस्य कादर्पस्य । उद्देशस्य । अत्र प्रतीष्टौ च । संकेतस्य । निमित्तस्य । आगमनगमनप्रवृत्तस्य चास्य । स्वीकारे ।

॥ [ इति ] पञ्चरोपनिक्षेपपाराजयिकम् ॥ २ ॥

पाराजयिकस्य भिक्षुण्याः प्रतिच्छादने ।

॥ [ इति ] प्रतिच्छादनपाराजयिकम् ॥ ३ ॥

निश्चितस्यावसारणयाज्ञायामुत्क्षिप्तस्य । भिक्षोः कृतानन्दनार्हसंवृतः (?) ज्ञात्वाऽन्तो निवारकत्वस्य प्रतिनिःसर्गे । परकन्त(?)त्वस्येव भेदेन ।

॥ [ इति ] निवारणपाराजयिकम् ॥ ४ ॥

संघावशेषा. ।

संचारित्रम् । आगारिकत्वे भिक्षुण्याः प्रलोभनं स्थूलम् । वेशस्य चान्यथा वाहने । नातः पण्येन दास्याः प्रेषणस्य बहिर्भावः ।

॥ [ इति ] भिक्षुणीसांचारित्रसंघावशेषः ॥ १ ॥

अमूलकक्लेशिके । पुंस्त्वेऽस्तित्वमत्र पुंस्त्वम् । किञ्चित्कस्वीकारे । रक्तया । पुरुषात् । रक्तादरक्ताच्च । अरक्तया स्थूलम् । दुष्कृतमरक्तात् किञ्चित्कग्रहः । न रक्तादरक्तायाः किञ्चित्कस्वीकारे दोष इति भिक्षुणीबोधने ।

॥ [ इति ] किञ्चित्कग्रहसमादापनम् ॥ २ ॥

चतुर्षु उत्तरेषु विना भिक्षुण्याः । न तृतीयत्वं शिक्षमाणत्वं तृतीयोंऽशः श्रामणेरी । निर्दोषः कामविप्रयोगः । अन्तरायापातवशतया च । प्रयोगत्वं प्राच्यन्ततः काले गतस्य । अस्तङ्गमान्तो दिवसान्तः । रात्रौ बहिर्वर्षकाद् भावे ।

॥ [ इति ] रात्रिविप्रवासः ॥ ३ ॥

दिना । चीव(चिव)रेदेकाकिनी ज्ञातिगृहभुक्तिनिमित्तं दुर्भिक्षे लब्धायां ज्ञातिभिस्सार्द्धं सम्बन्धोपविचारसंवृतौ । दस्युरेनाम् ।

॥ [ इति ] दिवाविप्रवास. ॥ ४ ॥

। अग्रप्रतिपत्तौ । अध्यानतारः । नदीपारसन्तरणे । पारप्राप्तौ बाहुभ्याम् । स्थूलमर्वाक् । दुष्कृतं कुल्यापारस्य ।

॥ [ इति ] नदीलङ्घनम् ॥ ५ ॥

प्रव्राजने । गणसंमतस्वामी परित्यक्तराजा स्वानुज्ञतायाः । मारणं प्रति । उपाध्यायिकत्वेन । जानन्त्येतत् ।

॥ [ इति ] प्रव्राजनम् ॥ ६ ॥

मृतधनोद्ग्रहणे । अनापत्तिः सांघिकस्य । अल्पायासेन चेत् ।

॥ [ इति ] उद्ग्रहणम् ॥ ७ ॥

चहि:सीक्यवसारणे ।

॥ [इति] अवसारणम् ॥ ८ ॥

रत्नप्रत्याख्यानमिदं तुल्यत्वमन्यश्रमणानां तत्र ब्रह्मचर्यं चरिष्यामित्यसावचनप्रवृत्तेरविरतौ । संघभेदप्रवृत्तेरपि । उत्तरायश्च ।

॥ [इति] प्रत्याख्यानम् ॥ ९ ॥

छन्दादिगामितानुयुक्ते भिक्षुणीनाम् । कलहभण्डनविग्रहविवादाद् भिक्षुणीभिः सार्द्धं विचारणम् ।

॥ [इति] कलहवृत्तम् ॥ १० ॥

संमुखविहृतौ भिक्षुण्याः । औद्धत्यद्रवकातर्यहेतुभूतयोः ।

॥ [इति] स्त्रीसंसर्गगतम् ॥ ११ ॥

तत्संसर्गसमादापने ।

॥ [इति] समादापनम् ॥ १२ ॥

संघभेदादेश्चतुष्टया[द्] भिक्षुणी(?)गतात् ।

॥ [इति] संघभेदादिचतुष्टयम् ॥ १३-१६ ॥

॥ [इति] संघावशेषः समाप्तः ॥

नैस्सर्गिकाः ।

जातरूपरजतरूपिकक्रयविक्रयं नहनतन्त्रवायद्वयाछेद(?)परिणमनसन्निधिगतं च ।

॥ [इति] जातरूपरजतादिदशकम् ॥ १-१० ॥

भिक्षोर्याचनादावतः प्रतिग्रहे ।

॥ [इति] प्रतिग्रहः ॥ ११ ॥

भिक्षुण्यै दत्वा । न देवच्छन्दं धारयेत् । अतिरेकपात्रस्यैकाहा[द्] ऊर्ध्वं धारणे ।

॥ [इति] पात्रधारणम् ॥ १२ ॥

प्रत्यर्द्धमासमार्येऽह्न्यनधिष्ठितानाधिष्ठानिकस्य ।

॥ [इति] अनधिष्ठानम् ॥ १३ ॥

फल्गुनान्त्यदिवसादर्वाक् कठिनोद्धारे । अनापत्तिश्चिरस्थपितकभिक्षुण्यर्थनायाम् ।

॥ [इति] कठिनोद्धारः ॥ १४ ॥

अनुद्धारे । तन् ।

॥ [इति] कठिनानुद्धारः ॥ १५ ॥

हिरण्य-सुवर्णविज्ञपने ।

॥ [इति] रत्नविज्ञपनम् ॥ १६ ॥

अन्यार्थं लब्धस्य चीवरस्यामिपीकृत्याभ्यवहरणार्थमधिष्ठानम् [illegible] ।

॥ [ इति ] चीवरभक्षणगतम् ॥ १७ ॥

चीवरशयनासनवर्षकार्थंश्च [illegible] । यस्य कस्य चित् [illegible] ।

॥ [ इति ] चीवरादिभक्षणगतम् ॥ १८ ॥

भिक्षुणी महाजनार्थं समादाप्य स्वत्र(तः?) परिणमनम् [illegible] ।

॥ [ इति ] महाजनोद्देशिकाधिष्ठानम् ॥ १९ ॥

संघार्थंश्च [illegible] ।

॥ [ इति ] संघोद्देशिकाधिष्ठानम् ॥ २० ॥

वचनस्वीकारार्थं बद्धस्यार्थस्य मोचने [illegible] ।

॥ [ इति ] मोचनम् ॥ २१ ॥

पलशतिकेऽद[दो ?] विंशतिकार्षापणादिमूल्यस्य वाससः स्वीकारैः(रे?) [illegible] ।

॥ [ इति ] गुड(?)वस्त्रसंभजनम् ॥ २२ ॥

पञ्चपलिकपर्यन्तस्य च [illegible] ।

॥ [ इति ] लघुवस्त्रन्सं(स्त्रसं)भजनम् ॥ २३ ॥

॥ नै सर्गिका. समाप्ता ॥ ॥ त्रिसप्तति· ॥

क्षुद्रकप्रायश्चित्तिकम् ।

असम्मतादिदशकनिष्कर्षणपरंपरश्रेणीविनिपद्यास्थानात् न प्रत्युद्धृती [illegible] ।

॥ [ इति ] शाटीगतवर्जनम् ॥ १ ॥

कतिपयकं भिक्षोरामिषमो(षो ?)पसंहरणं प्रव्रजितायै [illegible] । पत्नीचरितत्वेऽपि [illegible] । ग्रहणं च तस्याः [illegible] । न स[ह]शय्यायाममहतः पुत्रस्य वर्जयत्वम् [illegible] । लब्धसंभृतेः [illegible] । दानमस्याः [illegible] । प्रव्राजनोपसंपादनयोः [illegible] । अपरिपूर्णद्वादशवर्षतायाम् [illegible] । आत्मोपसम्पन्नतायाः [illegible] । ऊनोपस्थानम् [illegible] । दद्युः पर्षदनलपर्षदुपस्थापनसंभृती [illegible] । प्रतिबलायै तदुपस्थापने [illegible] । पूर्णतायां द्वादशस्वस्योपसंपद् वर्षाणाम् [illegible] । नान्या याचेत [illegible] । अलब्धप्राक् संभृतेः पर्षदुपस्थापने [illegible] ।

॥ [ इति ] अलब्धसंवृत्युपस्थापनम् ॥ २ ॥

अमितपर्षदः परस्याम् [illegible] । ऊनलोपस्थापनम् [illegible] । उपसंपादने द्वादशवर्षत्वादर्वाक् परिणीतायाः [illegible] ।

॥ [ इति ] ऊनद्वादशवर्षोपसंपादनम् ॥ ३ ॥

विंशतेरन्यस्याः [illegible] ।

॥ [ इति ] ऊनविंशतिवर्षोपसंपादनम् ॥ ४ ॥

उपाध्यायिकत्वेनादत्तशिक्षयोः [illegible] । पर्वलंघने [illegible] । अचरितत्वेऽस्याः [illegible] ।

[॥ इति ] अशिक्षितशिक्षोपसंपादनम् ॥ ५ ॥

चरिततायां नो (५९)।

॥ [इति] चरितशिक्षानुपसंपादनम् ॥ ६ ॥

स चेन्मे चीवरं ददासि ततः स्त्वोप(त्वामु?)पसंपादयामीत्युपसंपत्प्रेक्ष-याचने (११६०)।

॥ [इति] चर्मार्पणनम् ॥ ७ ॥

प्रव्राजनानुकूल्यसंदर्शनेन संक्षेप्य गृहविस्तरमप्रव्राजने (६१)।

॥ [इति] विप्रव्राजनम् ॥ ८ ॥

प्रव्राजनेऽनुवर्षम् (६२)। सन्तानव[ा]हुल्यम् (६३)। अननुज्ञातायाः स्वामिना (६४)।

॥ [इति] अननुज्ञातोपसंग्रहः ॥ ९ ॥

व्यभिचारिण्याः (६५)। गर्भिण्याः (६६)। शोकहतायाः (६७)। भण्डनकारिण्या उपसम्पादनेऽपि (६८)।

॥ [इति] लापक्षालोध्वं(?)संग्रहगतम् ॥ १० ॥

प्रव्राजितोपसम्पादितयोरनुपग्रहे (६९)। अनपकर्पणेऽन्तरायदृष्टौ (११७०)। अशिक्षणे (७१)। अनुपस्थापने ग्लानयोः (७२)। सान्तेवासिन्योः (७३)।

॥ [इति] अभ्युपेक्षणगतम् ॥ ११ ॥

स्वयं सेव्ये जतुलोठकस्यान्तरा धारणे (७४)। न प्रतिस्रोतो व्यायच्छेत (७५)। न योनिद्वारे शुक्रं प्रतिक्षिपेत् (७६)। न चर्मपट्टेन पार्श्वबन्धनं कुर्वीत (७७)। न क्षेमपट्टेन स्तनयोः (७८)। न सुगतान्तरायेनान्तरणम् (७९)। निदर्शनमेतत् (११८०)।

॥ [इति] अनङ्गसेवा ॥ १२ ॥

अङ्गुलिपर्वद्वयादूर्ध्वं व्यञ्जनस्यान्तःशोचने (८१)। अनङ्गमेव प्रतिकृतिः (८२)। पाणितलघातस्यात्र दाने (८३)।

॥ [इति] अनङ्गसेव[ा]विधिव्यावाधवृत्तम् ॥ १३ ॥

रोमापनीतेरतः करणकारणयोः (८४)।

॥ [इति] सेव्योपकल्पनम् ॥ १४ ॥

गृहिणा सार्द्धं स्थितौ प्रतिच्छन्ने (८५)। कुड्यपाटवस्त्रगहनान्धकारैरेवत्वं संपत्तिः (८६)। भिक्षुणा (८७)। अभ्यवकाशे पूर्वेण (८८)। उत्तरेण (८९)। ऊनापत्तिः सद्वितीयतायामस्य (११९०)। सपश्चात्सच्छ्रमणिकात्वे भिक्षुण्याः (९१)। गृहिण उपकर्णकेन सन्देशदाने (९२)। गृह(हि?)णोऽस्यैव मतः (९३)। भिक्षोः (९४)। अतश्च (९५)। वियोद्ग्रहणे गृहिणः (९६)। पाठनेऽस्यास्याः (?) (९७)। वधवध(?)-व्रणमोचने (९८)। व्याजेन (९९)। तस्मादनापत्तिः भूततायामर्थस्य (१२००)।

॥ [इति] असंस्पर्शादिसंसर्गगतानि ॥ १५ ॥

सन्तानधारणे (१)।

॥ [इति] प्रसवाभिष्वङ्गः ॥ १६ ॥

गृहस्वामिनमनवलोक्यान्तर्गृहे रात्र्यतिनमने (२)। अनापत्ति(ः) रूपपीनतायां

तदवलोकने (१) । रात्रेरप्रत्यवेक्ष्य प्रतिच्छन्नेऽतिनामनम् (२) । लयने विना परया भिक्षुण्या (३) । अनापत्तिः हतादित्वे(?)ऽस्याः (४) । अवष्टम्भायतद्वारपरिहरणानि (५) । संस्पृष्टशय्याकल्पने (६) । अनापत्तिरनया सार्द्धमनेकयापि कृतावरणतायां घृश्या(?)दिनोपस्थितस्मृतिरनासादनेऽङ्गसंस्पर्शस्याचलमञ्चे प्राकृते संस्तरे वा (७) । दुष्कृतं संभवे (११०) ।

॥ [इति] संभोगसंवासप्रतिक्षेपः ॥ १७ ॥

कारणे भिक्षुण्या स्वाङ्गोद्वर्तनस्य शिक्षमाणया (१) । श्रामणेरिकया गृहिण्या (२) । तीर्थ्यया (३) । उत्कुटिकाकारणे (४) । सुगन्धद्रव्यैः स्वाङ्गोद्वर्तने (५) । पिण्याकेन (६) ।

॥ [इति] परिकर्मगतम् ॥ १८ ॥

स्नाने हस्तसंलग्नकया (७) ।

॥ [इति] जलसम्भोगः ॥ १९ ॥

प्रसाधनार्थे निष्ठुक्तास्तुशीरस्य (१) । फणकूर्चन्या(?)स्यप्रतिशीर्षकाणाञ्च (२) । गृहालंकारप्राप्तौ (११०) ।

॥ [इति] प्रसाधनगतम् ॥ २० ॥

नृत्तो(त्ये ?)येन केनचिदङ्गेन (१) । गाने (२) । यत्र तत्र तदभिप्रायेण स्वरविकारे (३) । वादने वादित्रस्य (४) ।

॥ [इति] उद्धर्षगतम् ॥ २१ ॥

छत्रस्य परिभोगभूते धारणे (५) । उपानहोश्च (६) । अनापत्तिः वर्षके शयनासनगुप्त्यर्थम् (७) । आसन्दी परिचर्यायोः प्रत्यनुभवने (८) ।

॥ [इति] लीलायितस्थगतम् ॥ २२ ॥

निषादेऽननुज्ञातेऽन्तर्गृहमासने (९) ।

॥ [इति] प्रागल्भ्यानुप्रस्कन्दनम् ॥ २३ ॥

परिभुज्य धर्मश्रवणदानावस्थायागारिकशयनासनमुत्सृज्यानवलोक्य गृहिणे प्रक्रमणे (११०) । त्यक्तिरस्योपविचारस्य पर्यन्तः (१) ।

॥ [इति] विप्रवादनम् ॥ २४ ॥

कर्त्तने सूत्रस्य (२) । अनापत्ति[ः?]लोठकादेश्च(?) कस्यार्थे प्रतिगुप्ते प्रदेशे (३) । स्वीकारे भिक्षुणीगणचोरस्य (४) । कृतावाभिपविक्रयस्य (५) । गृहव्याकुलिकायाश्च (६) । न मधकर्म कुर्यात् (७) । न पानागारं वाहयेत् (८) । पक्तायामस्य (९) । अनापत्तिः भिक्षुसंघस्य आचार्यसब्रह्मचारिणामर्थे प्रतिगुप्ते प्रदेशे (११०) ।

॥ [इति] गृहिणीशिल्पगतम् ॥ २५ ॥

भुक्तवस्वेऽच्युत्वासनादभ्यवहारे ।

॥ [ इति ] लेहंड(?)वृत्तम् ॥ २६ ॥

लसुनस्य ।

॥ [ इति ] असभ्यगन्धोपभोगः ॥ २७ ॥

रजश्चोडस्यानाधारणे । सूत्रके नास्य चद्धस्यावस्थापनम् । क[ा]लानुकालमस्य शोचनं रञ्जनञ्च । [उ]दकशाटिकायाञ्च । धारयेदेने । धावकेन चीवरधावने ।

॥ [ इति ] शुचिमङ्गगतम् ॥ २८ ॥

दाने श्रमणचीवरस्यागारिकायावगुंठनार्थम् ।

॥ [ इति ] धर्मध्वजानादरगतम् ॥ २९ ॥

भिक्षुणा सार्द्धं संघाट्याः परिवर्तने ।

॥ [ इति ] ध्वजपरिवर्तनगतम् ॥ ३० ॥

वर्णमात्सर्यकरणे । कुलावासलाभधर्ममात्सर्याणाञ्च ।

॥ [ इति ] मात्सर्यगतम् ॥ ३१ ॥

निष्कासने भिक्षुणीवर्षकात् । यथातथा भिक्षुण्याः । पूर्वोपगतायाश्चान्तर्गृहात् ।

॥ [ इति ] निष्कर्षणगतम् ॥ ३२ ॥

चोदने दुर्दृष्ट्यादिना ।

॥ [ इति ] विहेठनगतम् ॥ ३३ ॥

शपथकरणे ।

॥ [ इति ] विपर्ययोर्दर्शनगतम् ॥ ३४ ॥

व्यथने क्रोधेनात्मनः ।

॥ [ इति ] अधीरथैकतम् ॥ ३५ ॥

अवखण्डने भिक्षुणीगणस्य । आक्रोशने च । ज्येष्ठपर्पदः पानीयेन सेके । अनापत्तिर्मूर्छितस्य । न भिक्षुमवध्रीवेत् । नेदंप्रव्राजितमाक्रोशेत । द्वयेऽप्येतत् । न भिक्षोः पुरस्ताद् गोचरे चरेत् । नास्थिरसंक्रमेण भिक्षुणा सार्द्धं गच्छेत् । सहदर्शनाद् भिक्षोरासनं मुञ्चेत् । निषाद एनां स्थितातिनामने निषण्णो निमुञ्चीत । अकरणेऽवलोक्य निषण्णत्वेऽस्य भजेत ।

॥ [ इति ] गुरुभूतपालीकरणगतम् ॥ ३६ ॥

अनुपशमने सति सामर्थ्ये भिक्षुणीकलेः ।

॥ [ इति ] संक्षोपघ्यु(?)पेक्षणम् ॥ ३७ ॥

पर्युषितच्छन्ददाने ।

॥ [ इति ] साम्मस्यवेलागतम् ॥ ३८ ॥

अन्वर्द्धमासमप्रत्यनुभनने भिक्षुभ्योऽववादानुशासन्याः । विना भिक्षुभिः पोषधकरणे । वर्षोपगतावभिक्षुकावासे । संवद्वये वर्षोपितायास्त्रिभिः स्थानैरप्रवारणे ।

॥ [ इति ] गुरुधर्मातिक्रमणगतम् ॥ ३९ ॥

दरिद्रस्य कठिनसमादापने । कठिनोद्धारार्थमदापने प्रस्रब्धौ साम-ग्र्याः । चीवरभाजनार्थञ्च । नास्या जिघृक्षायां कृतत्वम् ।

॥ [ इति ] परविघाताचरणगतम् ॥ ४० ॥

वर्षकमननुपरिन्य(?) प्रक्रान्तौ । उपचारत्यागे । न वर्षकमु[ त् ?] क्रमेण दद्यात् । न गृहवस्त्वापणवस्तु वा ।

॥ [ इति ] वर्षकास्फी(?)तिकरणगतम् ॥ ४१ ॥

जनपदचर्याचरणेऽन्तर्वर्षम् । अनापत्तिरन्तरायप्रत्युपस्थापने । वर्षोपितत्वादचरणेऽस्याः । चरणे साशङ्के राष्ट्रे । प्रतिविरुद्धे च ।

॥ [ इति ] प्रच(च)रणाप्रचरणगतम् ॥ ४२ ॥

देवकुलादौ तीर्थ्याश्रये गत्वा वादस्य करणे । पृच्छायां प्रश्नस्याकृतावकाशस्य । दत्त्वासनं प्रति सम्मोद्य पृष्टागमाभियोगमवकाशं कारयेत् ।

॥ [ इति ] संजल्पगतम् ॥ ४३ ॥

बहिःभूम्ये(म्यामे ?)काकिनीगमने । छोरणायामुच्चारस्य हरिते तृणे । अनापत्तिः ग्लान्ये स्फुटत्वे च नीलतृणैः सर्वस्य । तिरश्च प्राकारमनवलोक्य । अनापत्तिः वरण्टकप्रतिक्षिप्ततायां प्राकारस्य । न शुचौ लोष्टं क्षिपेत् ।

॥ [ इति ] उच्चारप्रतिसंयुक्तम् ॥ ४४ ॥

॥ शुद्धप्रायश्चित्तिकानि समाप्तानि ॥

प्रातिदेशनीयानि ।

न श्रोणीनि वस्त्रं निवसीत । नावभ्रु(?सु)तान्तर्गृहं गच्छेत् । भैक्षवांश्च । शैक्षाः ।

## ॥ भिक्षुणीविभङ्गसूत्राणि समाप्तानि ॥

## प्रकीर्णशिक्षापदानि ।

### ( १ ) शमथगताः ।

दुष्कृतमापत्तियोगे ध्वस्ताप्ररूढयोः । अनुपसम्पन्नकप्रव्रजितस्य च मर्यादातिक्रमे । तत्पक्षाणां मानसम् ।

धारणं विप्रवासश्च स्पर्शमध्येऽनिवारिते ।
भोजनं बीजाघातश्च देशे च हरिते शुचेः ॥
उत्सर्गं वृक्षपोहश्च शैक्षा उद्देशयोस्सह ।
रक्तस्पर्शन(?)मुपस्त्या च रजतसान्निध्यनाद्ययोः (?) ॥
भूमिप्ररोहघाताभ्यामुत्सृज्यान्तं च पुत्रगम् ।
प्रावृष्येकत्रवसनं पोषधः सप्रवारणः ॥

इत्याद्यस्यान्तभाग् लिङ्ग अनाशायत(?)कान्तारिकागतां तालिकामालंब्य तत्स्थं वा सूत्रकम् ।

न सोपानत्कश्चंक्रम्येत (६) । प्रज्ञपनं स्खलमानकस्यादिग्ध्यै पांसुना पादयोः (७) । तृतीयेऽह्नि प्राहाणिकः पादौ प्रक्षयेत् (८) । असक्तोऽश्वमत्तत्रापि (९) । आवृतद्वारे (१०) । पार्श्वमपि दत्त्वा (११) । सम्मन्येरन् प्रहान्(?ण)प्रतिजागरकम् (१२) । तद्वृत्तमुत्थायैव सेकसन्मार्गसुकुमारी गोमयाकार्षी प्रहाणम् (१३) । आसनप्रज्ञपनम् (१४) । अशुचिकुड्यो(? ड्याः)च्चोचनम् (१५) । सेकादिशुन्धनसूचिकापानीयस्थापनम् (१६) । गण्डीदानश्चागमाय (१७) । कारणपृष्ठमत्र स्थापनम् (१८) । संघसन्निपातार्थं तिस्रो घुमास्तावन्तः प्रहाराः (१९) । कर्मदानार्थश्च घुम[ा]स्त्वेका (२०) । तिस्रः परिवृत्तयोर्द्वौ प्रहारमित्यपरम् (२१) । मृतस्यांसदानाय शुण्डिका (२२) । एकपरिवर्त्तः प्रहारश्चेत्यपरम् (२३) । खक्खरकः प्रहाणिकार्थम् (२४) । कटिकेत्यपरः (२५) । यावदात्तमापदि (२६) । मुक्त्यर्थसन्निपातार्थमुभयोः कटिकागण्ड्योर्हानम् (२७) । अन्तरितयोर्विलम्बेन (२८) । असंपत्तौ गण्डीदानेन संघोधनस्य महासन्निपाते यमलशंखयोरापूरणम् (२९) । भेर्यास्ताडनम् (३०) । न गण्डीं नाभ्युद्गच्छेत् (३१) । न न क्षिप्रम् (३२) । संभाविनि कार्यस्य कालेऽवशिष्टे यथासुखं करणं दत्तत्रिदण्डके (३३) । परिमण्डलस्यास्य दानम् (३४) । दक्षिणदेशनकरणम् (३५) । परिमण्डलस्य (३६) । पृष्ठत[ः] परिजागरितुः गमनम् (३७) । आगमनमग्रतः (३८) । तद्रूपथ्येत् प्रत्ययः कृतकोपनापावरणीव्यपदेशः (३९) ।

॥ [ इति ] पोषधवस्तुनि शमथपोषधगतम् ॥ १ ॥

(२) स्थानगताः ।

सम्मन्येरन् पोषधाग्रसम् (१) । सर्वजातकृतनिष्ठितं वस्तु (२) । स बहिर्व्यामोपविचारम् (३) । अभिरुचितसंघस्य (४) । कर्मान्तराणामपि तत्स्थानम् (५) । बध्नीयुः सीमानमार्द्धतृतीययोजनपर्यन्तात् (६) । शैलकुड्यस्तम्भवृक्षप्राकारप्राग्भारातिमार्गोदपानादौ प्रतिदिशं संलक्ष्य तत्(?ज्ञ)ज्ञैः भिक्षुभिः परिकीर्त्तिते सन्निधौ संघस्य स्थावरे चिह्ने कर्मणः करणम् (७) । कृतायां संवृतावत्र विप्रवासश्चीवरः (८) । कुर्युरेनाम् (९) । सत्त्वोद्देशकं करणं मण्डलस्संमतेः (१०) । नाप्रस्रब्धे पूर्वे चान्यान्तरस्य रूढिः (११) । मुञ्चेयुः सीमानम् (१२) । युज्यते द्वयोः

सीम्नोरेकेन वचसा बन्धो मोक्षो वा [८२] । कुर्व्वं कर्मण्यबद्धसीम्न्यावासे सीमा [८३] । यत्र वाशिवबहनी(?) परिभ्रष्टोदकपातः [८४] । उपविचारान्तो ग्रामे [८५] । क्रोशान्तः प्रतिदिशमरण्ये [८६] ।

॥ [ इति ] पोषधवस्तुनि स्थानगतम् ॥ २ ॥

( ३ ) सामग्रीगताः ।

सम्पद्यते छन्ददानतस्तेन सामग्र्यम् [८७] । न सीमाबन्धे [८८] । कल्पिकं शिक्षादत्तकात् तद्ग्रहणमुपस्थापिततद्भिक्षुसंज्ञस्य [८९] । न दानम् [९०] । भवति संघृतैरल्पमतकेनाप्यग्रत्वम् [९१] । परिशुद्धिदानेन चैक्यं पोषधे [९२] । प्रवारणायाश्च [९३] । तद्दानेन कुर्वीतैवमेते [९४] । प्रतीच्छेयुरेवंविधिम् [९५] । न गणशश्छन्दादिसंगत्या कर्मकरणमन्याय्यम् [९६] । न तुल्यप्रक्रमाणां वचनीयानामविषुल्यवचनम् [९७] । नैकेनानेकैः तदानयनम् [९८] । आख्यानशक्तेरत्र परिच्छेदः [९९] । यथाकथंचिदेतद्दानानामशक्तौ संपादनम् [१००] । अपि कायेन [१०१] । कथंचिदप्यशक्तौ संघस्य वा तत्र गमनं तस्य वा मञ्चेनानयनम् [१०२] । नैतान् गृहीत्वा धावेत् [१०३] । न जवेत [१०४] । न प्लवेत [१०५] । न याष्टां लंघयेत [१०६] । न परिपण्डाम् [१०७] । न खे तिष्ठेत् [१०८] । न बहिः [१०९] । नान्तरित्यान्यक्तिःश्रयणीपदकमाक्रामेत् [११०] । न सोपानकडेवरम् [१११] । न कण्ठ(ण्ठ?)मात्रमुदकमवगाहेत [११२] । न स्वम(?प)न् समापत्तिं कुर्वीत [११३] । वै(?)तरिकत्वेनास्यनयोः गर्हत्वं भिक्षोरारोचयेत् [११४] । संघस्येत्यपरम् [११५] । समन्वाहरत भदन्ता इत्युपक्रमः [११६] । असंप्राप्तस्य संघमध्यं कालक्रियामागारिकादित्वप्रतिज्ञात्वेनानीतत्वम् [११७] । आनीतत्वं संप्राप्तस्य [११८] । परेण पञ्चदश्यां गृहीतत्वे भिक्षोर्मुञ्चैनं भिक्षुं सब्रह्मचार्येप(पोऽ?)स्माकमिति ब्रूयुः [११९] । अमुक्तावस्त्यस्माकमनेन सार्द्धं किञ्चिदेव करणीयमिति साद्यं(?) [१२०] । तथापि मण्डलके कुर्वीरन् [१२१] । नोर्द्ध(?र्ध्व)मस्य मोक्षाय न व्यायच्छेयुः [१२२] । भवत्युत्प्रेक्षितेन व्यग्रत्वम् [१२३] । पृथग्भावरुचिमभिनिरूप्य कर्मणः कृतौ स्थूलात्ययः [१२४] । न विचिकित्सितं निश्चितं वा कल्पमानत्वेऽनुत्थितेर्दोषस्य कर्तुं [१२५] । कर्तृशुद्धेः पर्य(?र्ये)षितं मायवो न कल्पतः [१२६] । मार्गणशब्दनोच्चस्थदिगवलोकने चे(?चै)तत् [१२७] ।

॥ [ इति ] पोषधवस्तुनि सामग्रीगतम् ॥ ३ ॥

( ४ ) परिभाषाः ।

पोषधं कुर्वीरन् पञ्चदश्यामन्वर्द्धमासं प्रातिमोक्षसूत्रोद्देशेन [१२८] । न प्रवारणेऽस्यासंपन्नत्वम् [१२९] । ज्ञपनव्यवस्थोद्ग्रहणपूर्वकं तदुद्देशः [१३०] । भाषणेनैव निदानोद्देशस्योच्चारणेन संपादनीयत्वं ज्ञप्तेश्च [१३१] । श्रुतश्रावणेनापि शिष्टस्य [१३२] । आरब्धस्य समापनं वर्गस्य [१३३] । कृत्स्नस्य तुर्यस्पृष्टौ [१३४] । भत्य(?)याञ्चाभाण्डोप-

भुग्द्रव(?) । कामोपघातसंवासानादरासो(?)धवस्तुकम् । 'तुल्यत्वं शिक्षादत्तकस्य । अनुपसंपन्नचञ्च । न तत्र । शिक्षमाणायाश्च । गत्यन्तराकारभजने लब्धौ भिक्षुसंज्ञानस्य । अलब्धौ न्यूनत्वम् । पूर्वप्रयुक्तश्च । तत्त्वं परस्य । द्रव्यस्य च प्रतिक्षिप्तात् । तुल्यस्यापि । व्यञ्जनस्य प(?)क्षेत्रत्वम् । यत्प्रयोगत्वं न्यूनार्थात् । तत्त्वं कृतस्य । स्वत्वं न्यूनस्य । न्यूनेऽंशत्वं दशाहे । ध्वंसो(?)क्षेत्रत्वे । नैतत्प्रतिच्छाददोषस्य । नैष्फल्यं चरितस्य मानाप्यस्य । परिवृत्तिरत्र कल्पानाम् । तदातनस्यात्मनः कर्तृत्वम् । नाश्वगतिरव-मन्यजस्य । गत्यन्तराका[र?]भजने च घाते । नावस्थान्तराप्रतिपत्ताव-न्यत्वम् । छेदो(?)तद्दोषमागमनम् । उत्सर्गश्च । अनेकत्र एकत्र वस्तुनि प्रज्ञप्तेः यावदेव तद्दोषः । तच्छेदस्तद्गतम् । सर्वत्र भुक्तानन्त्य(?)त्वे संघावशेषः । नानेकक(? क्रि)याफलेनापत्तिव्यवधानम् । अर्धत्वंकारे दु[ष्]कृतस्य । न्यूनांशत्वं न्यूनेष्ववयवेषु । सर्वत्र विचिकित्सतः प्रवृत्तौ सत्त्वान[ा]म् । संज्ञानं प्रयोगेऽङ्गम् । न त्वसंधाने । नाब्रह्मचर्यशुक्रविसृष्ट्योः । श्रोतुश्चासत्त्वे । योग्यत्वं सर्वाङ्गेषु ग्रहणमने(ना?)सेवायां प्रतिपत्तत्वम् । ऊनत्वं परत्रान्यस्य । ततोऽप्यनेकत्वैकत्वे । मनुष्ये च तिरश्च(?) । अन्यद्धि धर्मकत्वमस्पर्शनेऽङ्गे । अधिकृतं स्पृश्यम् । प्रतोदे च । अन्यवत्त्वं नखदन्तनिर्मांसास्थिरोम्णाम् । म[ा]नुषगतेर्व्यवहार्यत्वं न नष्टप्रकृतेः । तद्वत्त्वं पण्डकोभयव्यञ्जनयोः । व्यवहारवत् संसर्गः । अर्धत्वं याचके प्रव्राजिते गृहीतवस्त्रारूढिध्वस्तयोश्च । सोपसंपत्कमध्वस्तं भिक्षुभिक्षुणीत्वम् । स्वपक्षोपसंपद्व्यञ्जनो(नयोः?)योगमात्र्याम् । लिङ्गत्वमेतद्गते गृहिणि ऊनम् । कल्पिकत्वं प्रव्रजितद्रव्येषु प्रमाणिकादित्वञ्च । स्वार्धत्वमसन्मुखत्वे । योषोऽर्थस्य विज्ञप्तौ । तं कुर्वे(?)गस्थितो यथसार्धहारयोः । नैतत् समादातरि । पात्रमस्य । वाक् च । सा । आत्मोपसंहिता । स्वाधिष्ठितत्वं कारये ।

॥ निभङ्गतमायाः परिभाषाः समाप्ताः ॥ ४ ॥

## ( ५ ) पोषधविधिः ।

न गोचरप्रसृ(?)तो योगं चाव(?)येत् । नाभ्यागमे । युक्तं विक्षिप्य(प्त?)क्रूरोद्गण्डकानां परिहरणम् । मापयेयुः प्रहाणशालाम् । स्वरुद्ध(?)मध्यं लयनद्वयम् । पञ्चके षट्के वा । द्वारकपाटशब्दाकरणापर्णोपायांश्च । वातायनश्च वि(?) तृतीये ऊर्ध्वं बहिस्संवृतमन्तर्विशालं

साधु (४५) । जालिकाकवाटिकासूचीघटिकाचक्रिकाऽपादकदण्डांश्च (४६) । करणम्मण्डपस्योपर्यमाने पुरान्तरस्या(?)त्रा (४७) । सोपानस्याधिरोहाय (४८) । परिक्षेपो(?)प्रपातार्थं वेदिकया (४९) । कीलनं लोहकण्टकैरकम्पनार्थमस्याः (१५०) । घट्टिर्वा(?) च प्रहाणमण्डपस्य लयनपंक्तेर्वा (५१) । न द्वारसम्मुखं द्वारं कुर्यात् (५२) । करणं द्वारकोष्ठकस्य (५३) । कुर्युर्गुहामपि (५४) । मृण्मयान्यासनार्थे संहतानि (५५) । पीठिकाश्च (५६) । चतुर्हस्ताऽसां समन्तपरिक्षेपेण साध्वी (५७) । पांचविध्यां याने (५८) । मौञ्जं साणं वाल्वजं पट्टिका वेत्रवैभङ्गुकमिति (५९) । प्रज्ञपयेयुरत्र तूलिकाम् (१६०) । शृष्टिपरितोऽस्यामधिकत्वं साधु (६१) । अर्कका-शेरकयूकशल्मलीनां तूलं पूरणम् (६२) । ऊर्णा शणः कर्प्पासो नतुकानि पत्रवैभङ्गुकश्च (६३) । काकपदकानामन्तरोऽन्तरे यथार्थमवस्थापनाय दानम् (६४) । भिदुध्यागमे(?) घटिकाधारणम् (६५) । सूत्रकेण कर्णो(?)पनिबध्य (६६) । यष्टेः सारणम् (६७) । सनैः(?) अदुःसार्थमार्ट(?)कं छिन्नैर्वेष्टितायाश्च नतुकैः (६८) । कण्डुसक(?)क्षेपः सूत्रकेन( ण ? ) वध्व(?द्ध)स्य पुनारान्त्यैः (६९) । प्रदीपस्याग्रतः स्थापनम् (१७०) । पादस्यावतारणम् (७१) । अपरस्यापि (७२) । चङ्क्रमणम् (७३) । वेक्षणमन्नार्द्धमासवृत्तस्य (७४) । सनिपत्त्यचायाम् (७५) । प्रतिकृत्य चेतितं सर्वत्र सन्निषीदेत् (७६) । सन्निपण्णतायां स्मृतिविमत्योरनन्तरेऽधिष्ठे(?)त (७७) । चित्तेन कर्मकारकः (७८) । स्वं चेदेकमतद्भन्तं पञ्चदशां मन्येत सप्रेमकप्रागुण्ये प्रयतेत (७९) ।

य आयुसनि(?ष्मानि)दं चेदं च करोति किं तस्य भवति सापत्तिको न्त्यायुस्म(? त्वयाष्म)तेदं चेदं च कृतं कृतमेवं सत्यायुसा(? ष्मा)न् सापत्तिको नाहमायुस्म(? ष्म)न्नेकोऽपि तु सर्वसंघोऽनेनार्थेनाह्लतावत्त्र(?)मायुस्मा(? ष्मा)न् स्वामापत्तिं यथाधर्मं प्रतिकुरु किं ते करिष्यति सर्वसंघ इति प्रक्रमेण दर्शनपथे शिष्टानामिच्छायां देशयेत् (१८०) ।

नाकाममत्रैनं चोदयेत् (८१) । सर्वे चेत् पञ्चदश्यामापत्तिं प्रतीयुर्विमतिं वा स्वप्रतिक्रियार्थमावासान्तरे कश्चित् प्रस्थापयेयुः प्रतिगृहीतृसंव(? म)त्यर्थम् (८२) । असंपद्याधिष्ठानं प्रतिज्ञपनं कामयेरन् (८३) । चतुष्कृतोऽग्रांगूभावे विहारकरणीयं स्थितमेव (८४) । अहापनमासनप्रज्ञप्तेः (८५) । संकसंमार्गसुकुमारीगोमयकापो-प्रदानसिंहासनासनप्रज्ञपनप्रदीपधर्मश्रवणदानेषु कृतेषूच्चतरके प्रदेशे स्थित्वा चतुर्दिशव्यवलोकनम् (८६) । दर्शनं भिक्षूणामङ्ग तावदायुस(? ष्म)न्तस्त्व-रितत्वरितमागच्छतामार्यसंघस्य पोपधः प्रच[ा]रणा वा पाञ्चदशिक[ा] इति वचनम् (८७) । अपरिपूरो(?)चतुष्कस्याधिष्ठानम् (८८) । वेलां यावदागमय्य (८९) । निपद्य केवलस्य (१९०) । सान्यत्वे शिष्टे सन्निधौ (९१) । सन्निपद्य त्रया-णाम् (९२) । तद्वत् प्रवारणं चतुर्णाम् (९३) । नासत्यातिमोक्षसूत्रोद्देशके तदास्थाने ज्ञात्वा पोपधमागमयेत् (९४) । न यत्रास्यातिक्रमस्तत्रोपगच्छेत् (९५) ।

नोपगतिमनु रक्षेत् [२१] । प्राक् परातः [२२] । तश्चोर्ध(? र्ध्व)म्मासद्वयात् [२३] । वस्तुकर्मलाभोपस्थायकपरिहारेणोद्देशकं परीच्छेयुः आगच्छन्तं सूत्रधरं प्रत्युद्गच्छेयुः छत्रध्वजपताकाभिः [२४] । विनयस्य मातृकायाश्च [२५-२६] । अर्धतृतीयानि योजनानि [२७] । अशक्तौ क्रोशपञ्चकम् [२८] । त्रिकमर्द्धयोजनं क्रोशमर्द्धक्रोशं परिषण्डां वा [२९] । चाक्साखिल्यकेन प्रत्युद्गम्य पात्रचीवरं प्रतिगृह्णीयुः [३०] । स्नानं कुर्युः [३१] । स्नेहलाभश्च संघे [३२] । वस्त्रादिपरिहारं दद्युः [३३] । धर्मश्रवणञ्च . [३४] । शास्तृधरत्वमेषां भिक्षुणीर्ष्यन्तं बोधयेयुः [३५] । नाकृतपोषधप्रवारणस्तद्दिने प्रज्ञायमान स्वत(?)दः स्थानात् प्रक्रामेत्स चेत् तदैव तद्वधे प्राप्तिः कलिकृद्भ्यो विमुक्तिरनुप्राप्तिः सत(?दृ)वृत्तानामेतरपरायन(? ण)त्वं वा [३६-३७] । न कलिकृद्भिक्षुकं सद्वृत्तभिक्षुकाद् गच्छेत् [३८] । नाभिक्षुकं सभिक्षुकादसहितः शिरस्यन्यत्रापदः कायचित्तप्रस्रब्धिवशता न(?) वा [३९] । नाकृतपोषधप्रवारणं [प्र]क्रान्तैर्निःश्रितमवसृजेत् [४०] । तद्रूपतायां प्रत्ययस्य सद्वृत्तोद्देशवन्तमुद्दिश्य वासं तत्रावतारे नियुञ्जीत [४१] । नैनामुक्तिमतिलङ्घयेत् [४२] । कल्पतापश्चादागतानामर्थे पुनः करणमनयोः [४३] । कामोऽत्र प्रवृत्तो[?ऽ]सम्यक्कृतां चेत् [४४] । समानयात्रेष्वपि [४५] । सामग्र(?)मितरे यायेरन् [४६] । अलाभेऽस्य सीमान्ते करणम् [४७-४८] । संपत्तिः शेषानुभवेन क्रियमानतायामागतौ [४९] । नियमो[?ऽ] प्रक्रान्तत्वे कस्यचित् तत्स्थानात् [५०] । बहुतरत्वे चागतानाम् [५१] । कालं प्रति बहुतराणामनुवर्त्यत्वम् . [५२] । समत्वे नैवासिकानाम् [५३] । अत्र च [५४] ।

॥ [ इति ] पोषधविधिगतम् ॥ ५ ॥

( ६ ) विभंगादिगतम् ।

न समाधेर्व्युत्थापयेत् [१] । नानववादकं ध्यायेत् [२] । न्याय्यो घटिकाकन्दुकप्रयोगः [३] । न वीर्यं संसयेत् [४-५] । पुत्रवदेतत् [६] । अविक्ष(? क्षि)प्ताक्लिष्टचीवरतयापि शय्य[ा]कल्पनम् [७] । नाग्लानो दिवा शयीत [८] । धारयेत् पृष्ठाधिक आयपदम् [९] । अन्तर्गतैश्चंक्रम्येतेन्द्रियैरबहिर्गतेन मानसेनाविलम्बितम् [१०] । स्पष्टमृजुः [११] । अशक्तौ सूत्रकेणाक्षिप्य [१२] । द्वादश स्वाध्यायकारकस्य हस्ताश्चंक्रमः [१३] । अष्टादश महार्णिकस्य [१४] । सूत्रयित्वास्य करणम् [१५-१६] । देशयेद् भिक्षुर्धर्मं निषद्य [१७] । अनेकता चेदेकः [१८] । यः कश्चिद् नानाधिष्ठो न चेत् तन्मुखिकया निर्गतिः [१९] । न मण्डलकेन [२०] । नार्धमण्डलकेन [२१] । न द्वावेकत्र [२२] । वृद्धान्ते [२३] । प्राभूत्यं चेद् द्वित्राण्युत्सृज्यासनानि [२४] । अतदासनश्चेत् [२५] । सिंहासने च [२६-२७] । स्थापयेत् खेटकटहकम् [२८] । आस्तरमन्र दद्यात् पाद्धकाच्छायिका वा [२९] । काले धवत्

कालं शोचयेत् [३] । धर्मश्रवणं कुर्युः निशायाम् [४] । अष्टम्यां चतुर्दश्यां पञ्चदश्याञ्च [५] । नैतदकरणे ग्लानस्य दोषः [६] । नाध्येष्यमाणोऽस्य भाषणार्थं न प्रतीच्छेत् [७] । अशक्त्यादावध्येषकं संज्ञपयेत् [८] । असति भाषणके परिपाटिकयोत्सार्य भाषेरन् [९] । अन्तत एके(? कै)कां गाथाम् [१२०] । प्रदीपस्यानुकरणम् [१] । अर्धचन्द्राकारेण प्रक्षि(? क्षी)रिण्याकारेण वा धर्मश्रवणसंगतिं प्रज्ञपयेत् प्रक्षीरिण्याम् [२] । अभ्यवकाशे धर्मश्रवणे वितानकदानम् [३] । वातवर्षे प्रवेशनम् [४] । न ततो धर्मश्रवणमुत्सृजेयुः [५] । मुहूर्तं स्थविरोऽग्रेगतं तूष्णीमागमयात्र धर्मं भाषेतान्यं याचीच्छेद्—वद भिक्षो धर्मम् [६] । भाषमाण-[म]वधार्य धर्मञ्चेदुत्साहयेत् [७] । न चेद् धारयेत् [८] । गृहिणामत्रागतानां धर्मे(? र्म)कथां कुर्यात् [९] । तीर्थ्यञ्च प्रत्यवतिष्ठमानं सुनिगृहीतमदर्शयत्कोपमनतुन्नयम् [१३०] । न पर्षदमादाय देशको गच्छेत् [१] । निर्गतामेनां धर्ममुखे निवेशयेत् [२] । सगौरवः सप्रतीशो नीचचित्तोऽवगाहेत [३] । सत्कृत्य देशयेत [४] । सगौरवो धर्मे स्थिरः [५] । अविक्षिप्तमानमः [६] । युक्तयुक्तैः पदैः [७] । अव्यवकीर्णैः सानुसन्धि [८] । मैत्रानुकंपानिरामिषचित्तः [९] । हर्षरुचितुष्टीः कुर्वन् [१४०] । तिष्ठेदसमाप्तेऽर्थवशेन [१] । भाषेत स्वरेण धर्मम् [२] । कुर्यादुत्थाय विभागम् [३] । उद्धृत्य चार्थः(र्थं?)कथाम् [४] । भङ्गसन्धी च [५] । दिवसस्य गणनं संघस्थविरेण सूत्रप्रोतवंशशलाकासंचारणेन [६] । उपधिवारिकेन तत आगम्यारोचनं संघे [७] । विशेषितस्य [८] । पक्षभेदेन [९] । विहारस्वामिदेवतार्थञ्च गाथाभाषणे भिक्षूणां नियोगस्य वचनम् [१५०] । अनन्तरम् [१] । अथ शुक्लपक्षस्य प्रतिपद् विहारस्वामिनो विहारदेवतानां चार्थाय गाथां भाषध्वमिति [२] । विहारस्वाम्युपनिमन्त्रणवचनम् [३] । एवं नाम दानपति[ः] श्वो भिक्षुसंघं भक्तेनोपनिमन्त्रयते तं भदन्त[ाः] कल्याणैः मनोभिः प्रत्यनुकम्पन्तामिति [४] । ऊनरात्रपादनं अर्धमासावशेषतायामृतोः [५] । अधिकमासककरणं राजानुवृत्त्या [६] । ज्योतिषिकानुवृत्त्या नक्षत्रतानुगतिः [७] । नाविचार्यानागमय्य पोषधं शून्योऽयमिति सीमानं बध्नीयुः [८] । अनङ्गमरूढो ज्ञाततावद्धत्वस्य [९] । निस्तत्वयापि प्रस्रब्धिः [१६०] । काल्पिकत्वस्य च कुटेः [१] । न कल्पते सीम्ना सीम्नः परिक्षेपः [२] । कल्पते मण्डलकाभिक्षुणीवर्षकयोर्दे(?)कानर्त्तें च [३] । व्यवतिष्ठते सीम्न्याचतुष्टयादेकवृक्षेऽनेका मर्यादा [४] । व्यवहारिकस्यात्र चिह्नत्वम् [५] । अनेवंभूतत्वमृद्धिमायाकृतयोः [६] । अस्थिरत्वं चन्द्रार्कतारा-किरणोर्मितरङ्गाणाम् [७] । सीमान्तरं वध(?)कं सीम्नि [८] । असत्त्वमेकत्वस्य विच्छेदे [९] । विपयत्वं संक्रमस्य स्थिरश्चेत् [१७०] । अनुवृद्धिरस्य ध्वस्तो पुनः कृतो (?) [१] । अप्रतिप्रसव्धप्रयोगतायाम् [२] । नोर्ध(? र्घं)सप्तरात्रादविच्छेद-

भूतं नभः । सत्त्वेनैवात्र न व्यवहारः कुतः सवर्द्धतया । नो(? र्ध्वं)-मध्यतोऽर्धतृतीययोजनान्तात् सीम्नो बन्धस्य रूढिः । एतस्मादधोर्ध(? र्ध्व) स्वरसांबन्धस्य तलवत्त्वम् । अरूढिरविप्रवा संवृतेरबद्धसीमतायां भूमेः । अपेति पाशे(शा?)बन्धस्य । नाखास्याः । स्तूपग(? गृ)हाङ्गणपोपधामुखेष्वपि पोपधे संमृज्यता । दत्तत्वं छन्दादेः संघे दत्तता । यस्य कस्यचिदतस्तदारोचकत्वेन भवनीयत्वम् । नैनं बहिःसीमस्थो ददीत दापयेत वा । न परंपरया । दुष्कृतं ग्लानावशच(?)प्राणब्रह्मचर्यान्तरायमीतादन्यस्य दाने । अनारोचनेऽनादरात् । निर्दोषं बहिःसीम्ना(न्य?)नया मील्या नयनम् । भिक्षूणां गणनमुपधिवारिकेण पोपधे शलाकाचारणेन । सुप्रवृत्तस्या(स्यो?)र्ध्वपदेऽप्यस्खलन्तायामुद्देशः । संघस्था(? स्थ)विरस्य । अप्रतिबलत्वे द्वितीयस्य । तृतीयस्य तस्यापि । तस्यापि धारेण । अन्यस्याशक्तावध्येपणम् । अप्रतिपत्तौ संघेन । सातत्तिकस्यापि । विष्ठाने शेपस्यान्येन । खण्डधरतायां यावद्भिः संपत्तिः । अनयस्सप्रत्यपायतायां ग्रासादिकस्थानलोभेनासमीपे ग्रामस्य योग्य(?)करणम् । करणमनवस्थाने सार्थेऽस्य गच्छद्भिः । अनिष्टौ शब्दनस्य संक्षेपेण । तावतोऽप्यधिष्ठानम् । निरवद्यं सा(? श्रा)द्धस्य प्रधानस्य च तुष्टिभावनायामाचारानुश्रावणम् । करणश्च सन्निधौ पोपधस्य । आपदि गृहिसन्निधौ देशनम् । अनुश्रावणश्चास्याचारस्य । संज्ञसये च राज्ञः । नानिर्वाहणे परस्यारूढिः । उद्देश्य सदियन्तकालोद्दिष्टूणां तत्त्वानुपगृहीतिरत्राधर्मः । श्रमणोपविचारादपेतत्वं अक्रान्तता ।

॥ [ इति ] विभक्तादिगतम् ॥ ६ ॥

॥ समाप्तं पोपधवस्तु ॥ २ ॥

ॐ

## § ३. वार्षिकवस्तु ।

### ( १ ) तद्धारकसम्मतिः ।

वर्षा उपगच्छेद् । त्रैमासीम् । प्रतिपदि । आषाढ्यानन्तरायाम् । श्रावणाया[म्] वा । विहारं कलायेयुः दशाहार्द्धमासेन भविष्यत्तायाम् । सामाग्रैरित्यपरम् । पूर्वाह्णे शयनासनस्य पातनम् । आपादकठिल्लकात् ।

॥ [ इति ] तद्धारकसंमतिः ॥ १ ॥

### ( २ ) शलाकाचारणम् ।

अपारणेऽनेकस्य । अक्तगन्धैर्धाञ्जेरीपटलकगते शुक्लैः वासस्सुपनिक्षिप्ताः शलाका वृद्धान्ते निवेश्य यात्रायां च "अस्मिन्नावासे क्रियाकारो यो युस्मा-

(? र्मा)कमुत्सहते तेन क्रियाकारेणासिन्नावासे वर्षावस्तुं शलाकां गृह्णातु, न च वः केनचिदन्तर्वर्षे संघमध्ये रणमुत्पादयितव्यो यो वः कस्यचित् किञ्चिज्जानाति स इदानीं वदतु यो वोऽन्तर्वर्षे संघे रणमुत्पादयिष्यते तस्य संघ उत्तर उपपरीक्षितव्यं मत्स्य( ? मंस्य)त" इति भिक्षून् वेदयेत् [illegible] । ग्रहणोपशमनं प्रति संघं ज्ञपयेदन्यः [illegible] ।

॥ [ इति ] शलाकाग्र(च)चारणम् ॥ २ ॥

( ३ ) वासवस्तुग्रहणम् ।

शास्तुरग्रे ग्रहणम् [illegible] । अर्धमुक्तेनामनेनान्यैः [illegible] । आचार्योपाध्यायैः श्रामणेराणाम् [illegible] । नैवासिकानामस्ये(? सं)तदन्ते शनैः स्थापनम् [illegible] । गणयित्वा प्रवेदनमियद्भिर्भिक्षुभिरासिन्नावासे शलाका गृहीतेति [illegible] ।

॥ [ इति ] वासवस्तुग्रहणम् ॥ ३ ॥

( ४ ) पात्रतद्ग्रहणादि ।

अन्तत(? तः)तस्य तचारकवुञ्चिकेन पुरतः स्थित्वा रोचनोपक्रमं "स्थविरायुकविहारः सलाभः सचीवरिको गृहाण" इति यथागुणम् [illegible] ।

॥ [ इति ] पात्रतद्ग्रहणादि ॥ ४ ॥

( ५ ) शयनासनादिदानम् ।

ज्ञात्वोद्देशमरण्य(? स्य)स्तूपसंघार्थे गतस्य गत्या मागित्वं वृक्षमूलहरितशाद्वलस्थण्डिलेष्वपि यथावृद्धिकोद्देशः [illegible] । द्वादि(?)भ्योऽसंभावने लयनस्यान्ततो निष्पन्दनप्रामाण्येनास्य भूमेः [illegible] । पात्रकरकोरु(? डु)कदन्तकोष्ठस्थानस्यापेक्षणम् [illegible] । द्वारकोष्ठकसोपानकोष्ठिकाप्रासादोपस्थानभक्तजेन्ताकशाला नोद्दिशेयुः [illegible] । न रात्रौ शयनासनम् [illegible] । नाध्युषितं ग्लानेनान्यस्मै लयनम् [illegible] । नैतद् ग्राम(?)स्यभावेन ददीरन् [illegible] । नैनमुपस्थायकं वा कर्म कारयेरन् [illegible] । न कुष्ठी सांघिकं शयनासनं परिभुञ्जीत [illegible] । प्रत्यन्तेऽस्य विहारं दद्युः [illegible] । न ससवेऽन्यत्र सांघिके तिष्ठेदाप्रासादपुष्करिणीद्वारकोष्ठकपरिषण्डचंक्रमस्थानवृक्षात् [illegible] । न वर्चःप्रस्रावकुट्योः प्रविशेत् [illegible] । उपास्थायकदानेनैनमनुकम्पीरन् [illegible] । पात्रचीवरस्थापनार्थमारण्यकेभ्यः सर्वदा लयनमुद्दिशेयुः [illegible] । वर्षोपगमने स्युः केचिदागन्तव इति वस्तु शयनासनञ्च स्थापयेयुः [illegible] । प्रभूतागतावुपगतेः पुनरुद्देशः [illegible] । नोर्ध(? र्घ्वं)मुपनायिकातः [illegible] । द्व्यादेरसंभावनाभूम्येकस्य [illegible] । नैकाहस्यार्थे शयनासनं गृह्णीत [illegible] । न लाभलोभात् विहारम् [illegible] । सर्वं परिभुञ्जीत [illegible] । पूर्वाह्णे क्वचित् पाठस्वाध्यायावस्थानचंक्रमाणां क्वचिद् मध्याह्ने परत्रान्यत्र चीवरस्थापनमावासोऽपरत्र रात्रावित्यस्य योगः [illegible] । खण्डफुल्लमुपगतो वासवस्तुनः प्रतिसंस्कुर्वीत [illegible] । वर्षकस्य वर्षोपिताभिक्षुणीभिरभिसंस्करणम् [illegible] । कलिकर-

निवेशासंपत्त्यर्थम् । हैमन्तिकग्रैष्मावपि शयनासनग्राहो(?) कुर्वीरन् । कालें(? त्लें)न चोद्देशम् । तद्यथा सामन्तकस्यापि विहारपरिवेणयोः । प्रासादस्यापि सैतदः(?) । नोर्ध्वमेनां प्रक्रान्तत्वादेषामनुवर्त्तयेरन् । न प्रकृतिस्थार्थे घट्टं(?) कुर्वीरन् । न भाविनार्थेन । अयममुन्नत्तोव-होरात्रे तदत्ययत्रे वा भविष्यत्ययममुत्रायमाचार्यस्य भविष्यत्ययममुपाध्यायस्य सार्द्धम्विहारिणोऽयमन्तेवासिन आलस्यकादेरयमिति विहारानुद्दिशेयुः । न प्रतीच्छेत् । लतापारिकस्यालयप्रतिविधानार्थं सम्मतिः । [न]र-ण्डानां सातनम् । क्षौद्राणां सूत्रकेणावृत्य वेष्टनम् ।

॥ [ इति ] शयनासनादिदानम् ॥ ५ ॥

( ६ ) उद्देश्यत्वादि ।

सर्वेऽनेकस्य वृद्धपीठानामप्युद्देशत्वम् । संस्तराणां च । न सांघिकम-प्यनर्द्धं नाशनधर्मेण शुचिना श्रामणेराय शयनासनं कश्चिद् दद्यात् । न भिक्षुण्यै । दानमस्यै विहारस्यात्र वाससम्पत्तौ पर्यन्ते । शयनासनस्य च शिष्टस्याप्रणीतस्य । "न यस्केनचित् सांघिकं शयनासनम्विना प्रत्यास्तरणेन परिभोक्तव्यं न कल्पप्रत्यास्तरणेन न मलप्रत्यास्तरणेन" इति वेदयेत् । अन्वर्धमासं च प्रत्यवेक्षेत । समयमुत्क्रम्य परिभुक्तावाच्छिन्द्यादौ रोच्य निःश्रये निःश्रितस्यान्यस्य संघे । "अमुकेन दानपतिनामुकेन वैय्यावृत्य-करेणामुकेन गोचरग्रामकेन श्वः संघो वर्षा उपगमिष्यति" इत्यारोचयेत् । अनुन्मादित्वप्रतिविनोदित्वयोः कौकृत्यस्यान्यस्य च दुःखदौर्मनस्यस्य सुखसौ-मनस्यस्य चेत्यादित्वरक्षितत्वयोः ग्लानोपस्थायकत्वस्य च सब्रह्मचारिषु भूतेः प्रत्याशंसनेनावासं गोचरञ्च पिण्डकभैषज्यदात्रोरवलोक्योपगमनम् । छन्ने भिक्षोः पुरस्तात् । नानेकत्र विहारे । न यस्मिन्नभिक्षुकत्वमकपाट-कत्वञ्च सहितम् । सर्वे दानपतिवैयावृत्त्यगोचरग्रामिकोपस्थायकानामु-त्कीर्त्तनम् । न बहिःसीमगमनमुद्गमयेदनधिष्ठितम् । सप्ताह-मधिष्ठितम् । सप्ताहमधितिष्ठे[द]र्थे धर्म्ये । तद्यथा नाम निर्याचनविहा-रप्रतिष्ठापनशयनासनदानध्रुवभिक्षास्नपनचैत्यप्रतिष्ठाप[न]यष्टिध्वजारोपणपूजाकर-णालचन्दनकुंकुमसेकदानपाठकौकृत्यप्रतिविनोदनदृष्टिगतप्रविनि[सृ]सर्गपक्षसंघ-व्यवसारणपरिवासादिचतुष्कदानावर्त्तनग्लानप्रश्नसनेषु भिक्षोः । भिक्षुण्या गुरुधर्ममानात्वदाने च । ब्रह्मचर्योपस्थानसंवृतेः शिक्षमाणायाः । उपसंपादने च । अत्र श्रामणेरस्य । श्रामणेरिकायाः शिक्षासंवृतिपाने । शिरोवेष्टनरजोहरणसीमन्तोन्नयनजटापहरणकुण्डलबन्धनेषु गृहिगृहिण्योः । संपावशेषगतमनुपसंपन्नानामपूर्वम् । उन्मज्जनमवसारणे गृहिगृहिण्योः ।

लङ्घयेदेतद् भक्तभैषज्योपस्थायकाभावे शक्तौ तैर्विना यापयितुम्[८३]। श्रामण्यजीवितब्रह्मचर्यान्तरायसंभावने[८४]। अनुलोमिकचित्तोत्पादनपापिकचाभिधारणयोः भेदाय पदाक्रममाणे संघस्य[८५]। नैतच्छान्त्यै श सम्भावनो न गच्छेत्[८६]। गतो न लङ्घयेत्[८७]। न प्रतिश्रुता(?) वर्षावासे नावासस्य सम्बन्धनम्[८८]। न कुर्वीत नास्त्यस्यैकपोषधतायामावासयोरुत्थानम्[८९]। अस्त्येकलाभतायाम्[९०]।

॥ वार्षिकवस्तु ॥ ६ ॥

(७) निदानादिगतम्।

पञ्चानामपि निकायानामुपगन्तव्यत्वम्[९१]। न शुद्धानां श्रामणेराणाम्[९२]। अवार्षिकाणाञ्च[९३]। नैषामेव रूढिरुपगतेः[९४]। न ग्राहत्वं शयनासनस्य[९५]। नासत्त्वे ग्राहस्य[९६]। नासंमतेन ग्राहणम्[९७]। नानुत्पादितादौ पिटकधरकालिकुत्सदसत्त्वयोरसंश्रितत्वम्[९८]। उषितत्वमनुपगतस्य स्थानामोक्षे[९९]। नाकाशे रूढिरुपगतेः[१००]। न नाभ्युत्सृज्य प्रासपृथिवीमुपनिबद्धां वा भूमिस्थे स्थिरे संजनतोऽन्तरापयायित्वम्[१०१]। ध्वंसस्त[ा]द्दशमभिनिःसृत्याधर्मपक्षसंक्रान्तावरुणोद्धृतेः न संदिग्धतायाम्[१०२]। नान्व्ये(? न्त्ये)धिष्ठानस्य पडहे रूढिः[१०३]। ध्वंसोपगतनिष्कार्ये तस्याप्रतिनिर्वृत्यवस्थानयोः[१०४]। पर्यन्तं परमत्र सप्ताहत्वम्[१०५]। अलब्धसंवृतेरेष पर्यन्तः[१०६]। अन्यस्य चत्वारिंशद्रात्रः[१०७]। दानमस्याः[१०८]। नात ऊर्ध्वं वहि[र]वस्तव्यता[१०९]। पञ्चानामपि निकायानामेतत्[११०]। अन्तःसीमस्य रूढिः[१११]। भिक्षोः पुरस्तात्[११२]। अनाशंक्यमनाक्षिप्तत्वं तीर्थ्यस्य दृष्टेर्विवेचनार्थं ज्ञातेः करणीयेनागमाधिगमयोरात्मनः कांक्षाविनोदार्थं गमनायैतत्कृतेः[११३]। अनुत्क्षेप्यत्वमुपगतास्य(?)स्य[११४]। निदर्शनं वासः[११५]।

॥ [इति] निदानादिगतम् ॥ ७ ॥

॥ समाप्तञ्च वार्षिकवस्तु ॥ ३ ॥

ॐ

## §४. प्रवारणवस्तु।

### (१) प्रवारणाविधिः।

न मौनं समाददीत[१]। शुद्धिमुक्त्योरनेन प्रत्यवगतौ स्थूलात्ययः[२]। दृष्टिश्रुतपरिशङ्काभिः वर्षोषितः संघं प्रवारयेत्[३]। पश्चिमेऽह्नि वर्षाणाम्[४]। गोचरा रोचयेयुः[५]। "यतः प्रभृति केलापनमिषद्भिः दिवसैः संघस्य प्रवारणा भविष्यति युष्माकमारोचितम्भवतु" इति[६]। विहारस्य मण्डनम्[७]। कूटागाराणां बन्धनम्[८]। शालानां चित्रणं स्तूपानां मोचनमौलनं च[९]। सिंहासनस्य मण्डनम्[१०]। "अद्य सर्वरात्रिकं धर्मश्रवणं

भविष्यति तत्र युष्माभिः सामग्री देया" इति गोचरारोच्य सूत्रविनयमातृक[ा]धर्मश्रवणदापनम् [illegible] । परस्तान्तैः प्राक्कर्मतो धर्म्यया विनिश्चयकथया रात्रेरतिनामनम् [illegible] । प्रागरुणसंभेदात् प्रवारणात् कर्म [illegible] । प्रवारणकं संमन्येरन् भिक्षुम् [illegible] । अपारणे नैकम् [illegible] । न्याय्यमत्रांशसः पंक्तौ व्यापारणम् [illegible] । दर्भान्सौ चारयेत् [illegible] । प्रवारणं प्रत्यन्येन संघस्य ज्ञपनम् [illegible] । प्रतिभिक्ष्वा प्रवारणात् पुरतस्तिष्ठेत् [illegible] । तस्मै प्रवारणं त्रिः [illegible] । द्विस्तावता ग्लानक्लान्तिशयनासनसंभेदकालातिक्रान्तिसम्बाधसंपत्तिसंभावने [illegible] । तावतापि सकृत् [illegible] । तेनापरस्मै निष्ठितायां पंक्तौ [illegible] । अभावेऽन्यस्मै [illegible] । सर्वसंघेन प्रतिवारिते एतत्त्वस्य संघे निवेदनम् "साधु प्रवारितं सुष्ठु प्रवारितं" इति [illegible] । सर्वे समर्थयेयुः [illegible] । येन तेनाश्रुचेः "स्वकेन वस्तुना वस्त्रधारणमारभेत वचनतो गृहीत्वा संघेन लभ्यं भदन्ता एवं रूपेणापि वस्तुना वर्षोपितं भिक्षुसंघं प्रवारयितुं" इति [illegible] । अतः श्रामणेरान् प्रवारयेत् [illegible] । ततो भिक्षुणीः [illegible] । प्रवारितत्वमधिष्ठाय गतस्यार्वाक्कृतप्रवारणायासहकृतौ [illegible] । न स्त्रियं परिगृह्यापि [illegible] । अशक्यतायामवस्थातुं मार्गप्राप्तं भिक्षुमवलोकयेद् गणप्रवारणेन [illegible] । प्रवारयेदन्तर्वर्षं प्रक्रमिष्यन् करणीयेन [illegible] । स्थापयित्वापि वस्तुपुद्गलमुभयं वा [illegible] । प्रतीच्छेयुरेनाम् [illegible] । स्थापनेऽनन्त्यतामुपनीय "न हैव वयमायुष्म(ष्म)न्नित्यर्थं सन्निपण्ण[ाः] सन्निपतिताः कश्चिदायुष्मन् वस्तु स्थापयेम पुद्गलमित्यपि तु शीलविशुद्ध्यर्थं पोषध उक्तो भगवता धर्मविशुद्ध्यर्थं प्रवारणा, चेदाकांक्षसि प्रवारय" इति [illegible] । पुद्गलं स्थापयेन्न न वस्त्विति वस्तु स्थापयेत् पुद्गलश्चेति अभङ्गः प्रतीष्टैः व्यपलापे स्थापनस्य प्रतीष्टतायां स्थापितस्य वा [illegible] । नैवंविधं किञ्चिदस्तीतिनादे मृषात्वमत्र पूर्वस्यास्य वा [illegible] । कलिकृतां चेद् भिक्षूणामाग[मन]मुपगताः शृणुयुः, द्वित्रिपोषधाक्रान्तिश्चेत् प्रवारयेयुः [illegible] । असंपत्तौ यश्च पाणिमण्डकानि संमन्येरन् [illegible] । कायस्वल्पकेन प्रत्युद्गम्य पात्रचीवरप्रतिसमनं लयनमालंककूटागारोद्देशः [illegible] । स्नानस्नेहलाभकरणम् [illegible] । करणधर्मश्रवणदानमित्येषां प्रलोभनानि प्रयुञ्जीरन् असंपत्तावात्मीभावस्य पोषधं कुर्वीरन् मण्डलकेषु [illegible] । ननु युष्माकमद्य प्रवारणेति ब्रुवाणानाम् "आगमयतायुष्मन्त आगन्तुका यूयं नैवासिका अनेनार्थेन" इति प्रतिवदेयुः [illegible] । प्रक्रान्तेषु प्रवारणम् [illegible] ।

॥ [इति] प्रवारणावस्तु ॥ १ ॥

## (२) क्षुद्रकादिगतम् ।

नाकृतश्रमणः(१ णं)सान्तरस्य प्रवारयेत् [illegible] । दशार्द्धमासेन भविष्यत्तायामस्यास्तत्कालः [illegible] । सप्ताहैरित्यपरः [illegible] । न मन्त्रिपातः [illegible] । नासावसान्त्वा-

नाकृतसंमोदनसंनिहितानां सर्वस्तदा [३०] । न कुपितं क्षमयेत् [३१] । न भिक्षुणी भिक्षुं बहिरावासात् [३२] । न पादयोर्निपत्य [३३] । क्षान्ते निपत्य गमनम् [३४] । नैनां क्षमयन्तीमनादृत्य भिक्षुर्गच्छेत् [३५] । न विलंघयेत् [३६] । संज्ञप्तेः क्षमनीयस्य पुरस्ताद्दापनमभिज्ञान[म्] [३७] । नानिष्टावुपायपर्येषणं नार्पयेत् [३८] । न चीरयेत् [३९] । न पर्यवस्थानापगतिं नोदीक्षेत [४०] । न क्षम्यमाणो न क्षमेत [४१] ।

॥ [इति] क्षुद्रकादिगतम् ॥ २ ॥

॥ समाप्तञ्च प्रवारणवस्तु ॥ ४ ॥

## § ५, कठिनवस्तु ।

### (१) क्षुद्रकादिगतम् ।

आस्तीर्णी(?)स्त् कठिनम् [१] । यथा अयमेवमास्तीर्णस्य परभोजनमपि निर्दोषं गणभोजनमनामन्त्र्य ग्रामप्रवेशश्चीवरविज्ञपनञ्च [२] । साधारण्यमस्य शिष्टेः लाभस्य [३] । अनुत्थानमस्यात्रापि कश्छिन्नवर्षपश्चिमवर्षस्थानान्तरोपितवर्षेषु भूम्यन्तरस्थेषु च [४] । वि(?)ष्ठानमेतत्प्राप्तौ [५] । भागिनो भ्यन्त्यथामणेरभूम्यन्तरस्यालाभे [६] । नोरिक्षप्तः [७] । तच्चाप्राप्तिनदधर्मपक्षेषु यावो भिक्षेषु [८] । मौलकालप्रवारणपर्यन्तवर्षानिमित्तकास्तारकादिपर्यन्तसम्बन्धी चीवरलाभसंख्यं च त्रिचीवरम् [९] । सांघिकमभृदितमविलिखितमपैलोतिकम् [१०] । न न वर्णितकम् [११] । अपरिभुक्तम् [१२] । दृढम् [१३] । असंबन्धानिमपङ्क्तिकगण्डूपकपट्टि(?)कपरिपण्डन (?) [१४] । अनैःसर्गिकसन्ततिप्रस्कन्नगतप्रत्यागतम् [१५] । छिन्नस्यूतम् [१६] । निष्ठितं पञ्चकम् [१७] । उत्तरे वा [१८] । अनास्तीर्णपूर्वञ्च [१९] । आस्तीर्णम् [२०] । अनेकमपि [२१] । यावत्तदास्तारकः [२२] । चीवरान्तराधिष्ठानमेतत्तस्मादुद्धृत्याधिष्ठितानि [२३] । रोचयेरन् सामग्र्याम् [२४] । अनुपितम् [२५] । संमन्येरन्नन्तःसीव्नि [२६] । अस्तारकश्च [२७] । यत्रास्योत्थानम् [२८] । तस्मै ददीत श्रम्याधानस्थविरज्ञनेष्वसौ पूर्वंगमः स्यात् [२९] । द्वित्रानुष्ठानेन [३०] । निष्ठितं संपत्तौ द्वित्राणां स्वयं सूचीपदकानां दानम् [३१] । आदानस्वयंकृति (?) तदन्तेष्वास्तरिष्याम्यास्तृणोम्यास्तृतं मयेति यथासंख्यं चित्तस्योत्पादनम् [३२] । नाद्यस्य हानावनुत्थानम् [३३] । "श्वोऽहमायुष्मन्तः कठिनमास्तरिष्यामि युष्माभिः स्वकस्वकानि चीवराण्युद्धर्त्तव्यानि" इति सामग्र्यामारोचनम् [३४] । सन्निपातगतानुष्ठानम् [३५] । गन्धपुष्पार्चितं सुरभिधूपधूपितं चाङ्गेरिपटलकस्थमेकं त्रिवा (?)नेकमादाय वृद्धान्तेऽवस्थितेनास्तृतेऽस्मत्पादनं प्रतिपदि [३६] । कार्त्तिकस्य [३७] । निरुक्त्या [३८] । आस्तृणोमीति [३९] । प्रतिभिक्षुमग्रतः स्थित्वा "आस्तृतं" इति निवेदनम् [४०] । "साध्वास्तृतं सुष्ठ्वा-

स्तृतं योऽत्र लम्भश्चानुशंसश्च सोऽस्माकं" इतीतरः । प्रत्यनुभूतिवदस्यानुमोदनम् । सम्मुखीभूतेन । कालेन कालं शोषयेदातापयेत् स्फोटयेत् । न धूमरजोगारे स्थापयेत् । न राज्ञः । नातो विप्रवसेत् । नादायान्यत्र गच्छेत् । नाशुचिकुटिं प्रविशेत् । अभ्यवकाशे तिष्ठेत् । द्विविध उद्धारः स्वयं विरतौ(?शुचिः)कृत्रिमश्च । स्वयम्विशुचिः प्राप्तो सीमान्तरस्य कठिनेन । उद्धतौ निराधिष्ठन्ते(?)ऽन्तःसीम्नो रणस्य । विच्छेदे तन्मण्डलान्तर्भावस्य । तमत्र प्रति । सीमातिक्रान्तावस्य संपत्तिः । अप्रत्यागमनचित्तेन । अस्य चोत्पत्तौ बहिःसीम्नि । अभावे चीवरकरणाभिप्र[ा]येणानुस्मृतेस्तदेव । करिष्यत्ता विच्छित्तौ भावे । पत्यागतेष (?) । त्रये करिष्यमाणस्यैतत् संस्थानमाशासमुच्छेदे प्रारब्धनष्टौ निष्ठान इति । उद्धर्तृनिश्चयवद् विमतिः । न कर्मणो न्यङ्कारमनुतिष्ठेयुः । फाल्गुणी तत्कालः । अन्तरा । सुपितकार्थतायामर्वाचीनोऽपि । आश्रुतेरस्मिन्ननुभूतवन्तं प्रत्यनुवृत्तिरनुशंसे । असत्त्वेऽनुस्मृतेः । आच्छित्तेः सत्त्वे । नानुद्धृते सर्वेषां तात्कालिकं लाभं भाजयेत ।

॥ [ इति ] कठिनवस्तु ॥ १ ॥

## ( २ ) पृच्छागतम् ।

यथाप्रधारणमास्तारः । नापोपधान्ते । उद्धारश्च । तद्दिनत्वमस्य । उद्धृतत्वं पुनः पोषधकृतौ । पृथगस्यास्तीर्ये भिक्षेषु संपत्तिः । धर्मवादिनां स तथा(?)स्तारः । कृतेऽप्यग्रेतरैरेषामावासे लाभेऽर्हत्वम् । नोत्क्षिप्तकानां प्रकृतिस्थकावासेऽस्योत्थानम् । भावपनिवेशनमास्तारः । भवति छन्ददानवशात् सहितेन करणीयस्य स्थितैः कृतौ कृतत्वम् । तदपच्युतिरुद्धारः । तस्माददत्त्वा छन्दं समसमापत्त्योः संनिषण्णोऽस्यानुत्थानमास्तारस्योद्धृतेश्च प्राक्त्र(?)वणात् । उपितत्वमेकसीमतायां तत्रावासान्तरोपितानामास्तारे । तत्स्थानत्वमास्तारकालेऽस्यामस्य । यत्र तदास्तृत्य पृथक् सीम[ा]करणे चास्य स्थानम् । प्रत्यासं पृथक्त्वेऽस्यैषामुद्धारः । प्रतिपक्षं भिन्नतायाम् । नानुद्धृतिरनास्तारोद्धारः । नानुत्थानकृत्यादपूरकत्वम् । नानास्तारत्वादुद्धारे । निर्दोषमास्तृतकठिनस्य । विनासंघाट्या ग्रामप्रवेशाद्याम्ब्राटके निषादात् ।

॥ कठिनवस्तुनि पृच्छागतम् ॥ २ ॥

॥ समाप्तञ्च कठिनवस्तु ॥ ५ ॥

## § ६, चीवरवस्तु।

### (१) चीवरवस्तु।

नाशस्त्रलूनं वासः परिभुञ्जीत [1]। छिन्नस्यूतं चीवरत्वायाधितिष्ठेत् [2]। भक्तिचित्रताशेषसममध्यान्यत्तद्गतपत्रमुखत्वपरिमण्डलत्वैः [3]। अन्तरवासं उत्तरासंघं संघाटीञ्च [4]। कुसुलकसंघ(?)क्षिके च यत् तद्विधे भिक्षुणी [5]। मतसंभवे याञ्चाया(?)पि [6]। नैतद्विहासस्तोद्गतिमागमयेत् [7]। रोहत्यन्यासंपत्तावरत्तकस्याधिष्ठानम् [8]। अच्छिन्नकस्य च [9]। आसेवकानामत्रदानं संभवश्चेत् [10]। आगारिकविघस्य च [11]। नमतकोचवप्रावारस्थूलकम्बलपैलातिकमच्छिन्नमासैव(?)कदानव्रतम् [12]। तत्क्षणादेवाशुचिप्रक्षणं सम्पत्तौ शयनासनं शोधयेत [13]। नैनं सांघिकमस्तरमंचपीठप्रत्यास्तृतमतेनानिषादात् संवरणं वा दत्वान्तर्द्धानमुपभुञ्जीत [14]। सर्वश्च चित्रमभूयो विनष्टम् [15]। न कल्पभूतेन मलधप(?)ता वा [16]। धारणं प्रत्यास्तरणस्य येन एकपुटं न्याय्यम् [17]। द्विपुटं पैलोतिकम् [18]। अकल्पिकं चित्रोपचित्रम् [19]। पत्रमुखमस्य कुर्वीत [20]। अधस्तृतीयभागादौ [21]। नैकखण्डमाधितिष्ठेत् [22]। कण्डूप्रतिच्छादनं तद्वान् धारयेत् [23]। पञ्चपैरेनाह्विसैः शोधयेत् [24]। कल्पते कौशेयमूर्णकं शानकं क्षौमकञ्च [25]। नातन्तोतमांगेयम् [26]। केशमयनाभ्यौलूकपक्षित्वसमादानम् [27]। स्थूलमत्र [28]। अन्यदेतद्भजनम् [29]। केशलुञ्चनपर्णशाट्यजिनसान्तरोचरया(?)पनतिरिटाङ्गनाडीसर्वनीलप्रवारणदीर्घदशफणदस्तकंचुकोष्णीपशिरोवेष्टनकृतपोटकंबलतीर्थिकव्यजञ्च [30]। पु(?)लासपत्रपूरदीपवर्त्तिकामात्रतयापि समतयै[व ?] विभजनम् [31]। विक्रीयकोचवतद्विधानाम् [32]। न पाटयित्वा [33]। पञ्चानां लाभे भाजनकरणम् "अद्यलाभो भाजयिष्यते तत्र युष्माभिः सन्निपतितव्यम्" इत्यारोचनं संघे [34]। गण्ड्या कोदनम् [35]। शलाकाचारणम् [36]। गणनम् [37]। प्रत्यंशप्रवारणम् [38]। ईशित्वक्रियमाणतायामान्त्यादिगतस्य [39]। नावसितत्वे [40]। कुलाभकेऽप्येतत् [41]। नानर्हः प्रक्रान्तायां तल्लाभक्रिया प्रविष्टः [42]। तस्मान्नियुञ्जीत ग्रहणे प्रक्रामन् [43]। दस्युत्वमग्रहणे प्रतिज्ञातवतः [44]। पणपञ्चकात् प्रभृति कुलाभके [45]। नानुक्तो गृह्णीयात् [46]। गृह्णीयादाचार्योपाध्यायो वा [47]। विश्रम्भस्थानार्थञ्च [48]। नास्वपक्षार्थम् [49]। शयनासनेऽप्येतत् [50]। भक्ते वा [51]। परस्परार्थं गृह्णन् विज्ञपयेत् [52]। नानाभवन्तमन्तर्भूयः [53]। नैकत्वमर्द्धस्य सुहृत्ता च लब्धेरनर्हप्रवेशे कारणम् [54]। अनर्हः संघलाभस्याधर्मपक्षेपु पतितो भिन्नेषु [55]। उपितत्वं बहुतरमुपितस्य तत्कालके लाभे हानायास्याद्गत्तौ मृत्यौ च [56]। यथाविनियतिलाभस्य व्यवस्था [57]। लब्ध-

भिक्षु [५८] । कृत्स्नप्रतिपादनेऽपि [५९] । कर्मसीम्ना संघस्यापरिच्छेदे परिच्छेदः [६०] । तस्यमग्नैकाद्येः [६१] । धर्मलाभे तद्भाणकानामीशित्वम् [६२] । एकार्षगाथाधारणं तत्त्वेऽत्र पर्यन्तः [६३] । अनर्हत्वं भिन्नव्यञ्जनस्येतरसंनिधौ मृतपरिष्कारे [६४] । तथोत्क्षिप्तस्य [६५] । असन्निधौ वा निवृत्ते निमित्ताच्चेतसि [६६] । अभिन्नत्वमस्य तारा(?)दीयैतद्ग्राह्यतायाम् [६७] । भिन्नत्वं भिन्नस्य [६८] । नान्यस्य प्रव्रजितात् सब्रह्मचारिणस्तदीशित्वम् [६९] । न ज्ञप्त्याधिष्ठिते प्राप्तस्य पूर्वचरमेण वा [७०] । कस्यचित् ततः संघवृद्धनवकयोः दानं तदाख्यम् [७१] । यत्राधिष्ठेयस्य गतता तत्सीमान्तर्गतानामधिष्ठ[ा]तृत्वम् [७२] । अकारणमत्र मरणस्थानता [७३] । सीमान्तरिकात् स्थल(?)स्थे कायेऽन्यत्र वा यातामाक्रान्तिस्तावद् गतानाम् [७४] । सप्रतिवस्तुकत्वे यत्रासौ तद्वत्त्वं परिस्कारस्य [७५] । अप्रतिवस्तुकेनान्यस्यमधितिष्ठेयुः [७६] । प्रेषितस्याप्रतिक्षिप्तस्य संप्रदानेन तदीयत्वम् [७७] । प्रतिक्षिप्तस्य प्रेषयितृत्वम् [७८] । प्रतिक्षिप्तस्यापि तेन [७९] । बहिरस्य रूढिः [८०] । सीम्नोऽन्तः संज्ञिना केवलाधिष्ठानम् [८१] । नाकृते निर्हारसत्करणधर्मश्रवणदक्षिणादेशनेऽधितिष्ठेयुः [८२] । अन्तर्गृहस्थत्वे पात्रचीवरस्य यस्मै गृहपतिना दानं तस्येशित्वम् [८३] । अर्हश्चेत् [८४] । विहीनश्च तेन [८५] । अदाने याचितवतः [८६] । क्रमे प्रथमस्य [८७] । असत्त्वेऽनुद्देशत्वात् पृष्टौ गतवतः [८८] । तद्वत् क्रमे [८९] । एनिकोत्भूतो तद्देयपरिमाणस्य तद्गामित्वं मृतपरिस्कारस्य [९०] । विभक्तस्यापि [९१] । यत्तेन सार्द्धमवस्थितं तस्य देयत्वं ग्राह्यता वा न तस्यैव [९२] । नानेन सब्रह्मचारिणामृणित्वम् [९३] । राता(?) दीपित्वं संभावने यावच्च एतत्तावत्तु नावकर्मिकस्य विनियोगः समं स ग्लानोपस्थायकस्तद्गामित्वं परिस्कारषट्कस्य नाधिष्ठेयत्वम् [९४] । सोत्तमाधममध्यमस्य [९५] । साधारण्यमनेकत्वे तस्य [९६] । प्रक्रान्ततायां ग्लानस्य मृत्यौ तादर्थ्ये देयत्वम् [९७] । नैतन्मृतद्रव्येऽनर्हस्य [९८] । न नान्यत्रोपगते [९९] । सर्वार्हत्वमत्रानु[प]संपन्ने [१००] । ह्रायते ग्लानस्योक्तोक्तेन दाने यथोक्तेन दाने यथोक्तं कार्यत्वम् [१] । अप्रगमो मृतकालस्वत्वसंपादने धनिनः [२] । प्रगमो गृहस्थस्य [३] । निर्यात्य गृहिणि मृते पुत्रदारस्य यथासुखकरणम् [४] । हस्त्यश्वोष्ट्रखरवेसरसन्नाहानां राज्ञि निर्यातनम् [५] । त्रये हिरण्यसुवर्णान्यकृताकृतानाम् [६] । रत्नानाञ्च [७] । स चेदन्यदेतत् तदंशत्वेनार्धि(?)रिक्तत्वेऽपि न चेदेवमेव बुद्धे मुक्तानाम् [८] । महारङ्गस्य च [९] । लेपस्य पिष्ट्वा(?)भिर्गन्धकुट्यां दानम् [१०] । अतदो(?)नोधिकस्य प्रतिमागन्धकुटिचैत्योपस्करणे विनियोगः [११] । बुद्धवचनलेखनसिद्धापयोधार्मिकस्य [१२] । यानस्य प्रतिमायाम् [१३] । ध्वजार्थं तदंशानाम् [१४] । खक्खरकसूचीघटीनाञ्च तद्योग्यानाम् [१५] । अन्यासान्ना(?)प्रधानां संघे [१६] ।

शस्त्रकं कृत्वैषां शरणम् [१०७] । यथार्हमन्यस्य सांघिकस्य निक्षेपभाजनं भोजनानि क्षेत्रगृहापणशयनासनायस्कारलोहनापितकुलालतक्ष-चरुटभाण्डदासी-दासकर्मकरपैरुपगोमहिष्यजैडकभैषज्ययुद्धशास्त्रपुस्तकानां मुसाध्यलेख्यानां प्रथमार्हत्वम् [१०८] । शाटकपटकप्रावरकोप्यंनत्पुला(?)तैलकुतुपवस्त्रकुण्डिकान्यपुस्तकलेख्यवर्णकानां द्वितीयस्य [१०९] । तृतीयस्य पञ्चतिलत्रीहिमुद्गमाषान्नधान्यान्नपानानाम् [११०] ।

॥ [इति] चीवरवस्तु ॥ १ ॥

## (२) क्षुद्रकादिगतम् ।

सन्नत्वं (?) मण्डलार्धमण्डलमेषु कुर्वीत [१] । मानार्थे तत्प्रमाणयष्टिधारणम् [२] । पत्रमुखेषु च [३] । तत्प्रमाणशलाकाधारणम् [४] । पर्यन्तोऽस्य प्रकर्षे चत्वार्यङ्गुलानि [५] । काकविततिर्यो [६] । अपकर्षे द्वे सार्धे वांगुष्ठोनं वा [७] । न भूमौ चीवरं वितन्वीत [८] । कठिनस्यतदर्थे करणम् [९] । दारुमयं वंशमयं वा [१०] । चतुरस्रकं कृतबन्धार्थं सूत्रकावकाशार्थं छिद्रं तदाख्यम् [११] । यावच्चीवरम् [१२] । शस्त्रकेन पाटकम् [१३] । धारयेदेनम् [१४] । काकचञ्चुकाकारं कुक्कुटपक्षकाकारं वा [१५] । नान्यदायसात् [१६] । न कमनमृष्टेन चित्रोपचित्रेण वा दण्डेन [१७] । न षडङ्गुलातिरिक्तस्य प्रमाणम् [१८] । नाष्टेत्यपरः [१९] । निष्प्रयोजनत्वमूनचतुरं[गु]लस्य [२०] । दत्तगोमयोपलेपे सेवनम् [२१] । अभावे गोमयस्य शिक्तसंमृष्टे [२२] । सीव्येदेनम् [२३] । सूच्यापि [२४] । धारयेदेनम् [२५] । नान्यां रीतिताम्रकंसमोमयीतः [२६] । ताम्रायसोस्तीक्ष्णयोरित्यपरम् [२७] । धारयेदस्यागृहकं नाडिकं स्फटिकं वा [२८] । नैतदलजिश्रामणेरयोरधीनं कुर्वीत [२९] । मधुसिक्थम्रक्षिते सूचीशस्त्रकाणां कीटकाभक्षणायनतुके स्थापनम् [३०] । पाशकस्यानपगमाय चीवरे दानं यलकं दत्त्वा [३१] । ग्रन्थिकायाश्च [३२] । न रजकेन रक्तमरक्तं वा वस्त्रं शोचयेत् [३३] । न तद्वत् स्वयम् [३४] । नास्यास्तरे न काष्ठमित्तके [३५] । कुण्डालके शोचयेच्छ्लक्ष्णे सुखोदकेन शनैः [३६] । परिवर्त्तनं हस्ताभ्याम् [३७] । अशक्तौ पदाभ्याम् [३८] । कल्पते एवं गृहिणां शोचनम् [३९] । अन्यथात्वं चरणमस्य रक्षेत [४०] । सुधौस्युत(?) रक्तं पंसुकूलं भारयेत् [४१] । नाशुचिम्रक्षितं चीवरम् [४२] । शोषणं साधुतायैसंगुत्य(?)रङ्गस्य छायातपे [४३] । विना चीलिका(?)ध्वनम् [४४] । आतृतीयाद् विशिष्टत्वम् [४५] । तस्माद् बहुनान्वित्वे(?) त्रिरादानम् [४६] । हीनतरत्वं परस्य [४७] । तस्मात् पृथक्स्थापनम् [४८] । लेखनमयं प्रथममित्यादि [४९] । पूर्वस्य च प्रथममुपयोगः [५०] । संमृदितचीवरस्य च [५१] । तस्मादपनीय कुण्डालके तन्मात्रमोक्षकस्य दानम् [५२] । अघरणं द्रवे [५३] । चिपलत्वमतिशुष्के [५४] । तस्मात्

मध्यस्य [७५] । कान्तारिकायां साधुशोषणम् [७६] । ततापां अन्तलगने(?)नचर्पटकैः [७७] । दुर्धराणां कक्षप्रज्ञप्ता [७८] । अनेकपार्श्वकृतापैरङ्गस्य संपरिवर्त्तनं पुनः पुनः [७९] । नवरङ्गस्य नवेष्वेव साधु दानम् [८०] । पुराणस्य पुराणेषु [८१] । शोषणं नवानामातपे [८२] । पुराणानां छायायाम् [८३] । पानीयोह्लकस्याचित्तलतायै दानम् [८४] । अपरेद्युः [८५] । न मेष्यां(?) चंक्रमे वा रङ्गकर्म कुर्युः [८६] । न विहारे [८७] । उपर्यस्य करणम् [८८] । नाचामनिकासामन्तके [८९] । प्रलिप्ते तत्र प्रदेशे दानम् [९०] । शुद्धाप्रवालिप्तश्लेष्मोचनम् [९१] । प्रस्तुते चेद् वातवर्षागमः करणं प्रासादे [९२] । प्रलिप्तेस्तत्र प्रदेशे कृते करणम् [९३] । गोमयेन मृदा वा [९४] । नासंपन्नकल्पाकोटितप्रत्याकोटितचीवरं निक्षिपेत् [९५] । नाशुचौ प्रदेशे [९६] । न गुरुणा सति पराक्रमे भारेणाक्रमेत [९७] । नान्यपरिभोगेन परिभुञ्जीत [९८] । नोच्चारप्रस्रावकरणाशुचिपरिकर्मणेषूत्तरासंघप्रावृत्तिं भजेत [९९] । नासिक्षिपेत [१००] । न पिण्डपातचर्याभोजनचैत्याभिवन्दनसामीचीकरणं संघसन्निपातववादधर्मश्रवणानुभवनान्यस्यां व्यापृतौ सांघाट्याः [१०१] । नास्यां निषीदेन्निपद्येत वा [१०२] । नाक्रमैनाम् [१०३] । नानपने यस्य कस्यचिन्नियुञ्जीत [१०४] । न कायसंस्पर्शकं परिभुञ्जीत [१०५] । कक्षघर्षेण दक्षिणस्यास्यां(?)नाननसंपातिः [१०६] । तदभूत्यै तत्र प्रदेशे वस्त्रस्यास्यां दानम् [१०७] । अध्यर्धहस्तवितस्तिकस्य [१०८] । उभयोः पार्श्वयोरष्टसूत्रेण लगनम् [१०९] । कालेन कालमस्य शोचनं रञ्जनञ्च [११०] । गैरिकेनास्यैतत् [१११] । धारयेत् मुखपोच(?प्रोञ्छ)नम् [११२] । श्वत्कायः कायोद्घर्षणम् [११३] । अभ्यन्तरे चीवरादस्य आवरणम् [११४] । लग्नस्य कषायोदकेन क्षौद्रमिश्रेण गते मथित्वा मन्दमन्दमपनयनं पूयशोणितस्य च [११५] । कालेन कालमस्य शोचनशोषणं रञ्ज(ञ्ज)नञ्च [११६] । धातुनास्यैतत् साधु [११७] । न यत्र कचन चीवराणि स्थापयेत् [११८] । वंशस्य तदर्थे समायोजनम् [११९] । द्रोणिकायास्तदर्थम् [१२०] । क्रियमाणे विहारे [१२१] । न कृते छिद्रणम् [१२२] । निदर्शनं विहारे परिवेणेऽप्येतत् [१२३] । लतारज्जोरस्यास्य(?)संपत्तिः [१२४] । शूपिकया साधु वस्त्राणां नयनम् [१२५] । कुर्वीतैनाम् [१२६] । त्र्यध्यर्धहस्तकस्य द्विगुणीकृत्य सेवनम् [१२७] । मध्ये मुखकरणम् [१२८] । जालकस्यात्र दानमस्त्रकेण [१२९] । अपरेण बन्धनम् [१३०] । उपरि परिभुज्यमानानां स्थापनम् [१३१] । अवलोक्य श्रोणिमिप्यत्तायाम् [१३२] । गुरूननुज्ञातो गच्छेत् [१३३] । कृतस्यावासस्यैकादिः [१३४] । धर्म्यया वा कथयाध्वनि गच्छेदार्येण वा तूष्णीम्भावेन [१३५] । विश्रामस्थाने गाथां मापेतापा(?)म् [१३६] । पानीयग्रहणस्य च [१३७] । यस्य तद् पायनीयं वस्तूद्दिश्य [१३८] । अपरां च देवताम् [१३९] । वासस्य त्रिदण्डकम् [१४०] । धारयेत् कान्तारिकायाम् [१४१] । तत्प्रमाणमध्यर्धं शतमुपादाय हस्तानामाशतात् [१४२] । देशानु-

रूप्येणेत्यपरम् (४३)। न विनैतया दुर्लभाकूपपानीये देशे चारिकां चरेत् (४४)। प्रस्फोटितचीवरोऽध्वगः स्नातवां(? त्वा) प्रक्षालितपाणिपादो वा गृहीतपानीयः पोषितो(?)पानके(त्क)स्त्रिचीवरं प्रावृत्य शान्तेर्यापथो विहारं प्रविशेत् (४५)। चतुरो वृद्धान् वन्दित्वानतिष्ठेत् (४६)। प्राकृते प्रदेशे न्यग्रब्दः (४७)। प्रासादिकः सुसंवृतेर्यः सम्भ्रमवेनास्य प्रतिशामनम् (४८)। नाज्ञायमान[ः]प्रतिशामयेत् सतीर्थ्यमपि (४९)। पिधीतां(?) द्वारं न देयं मृगयते निवार्यो गृहाण इति प्रत्यायितस्य प्रतीच्छयान्यु(?)लक्षितवतोपहृतौ विश्वासवस्तुताञ्चोपनीतेन ममैवायं सहाय इत्यादि प्रतिपादनया दासत्वम् (५०)। अभिज्ञानसंश्रयणमविदितस्यापरेण विशेषगताद्युपायः (५१)। अर्प्यमाणयातेनान्ते चेत् प्रमीलनम् (५२)। प्रश्नस्यानुप्रमादासंपत्तये करणम् (५३)। नाशने याचितस्याशुचिनाऽसंपत्तो(?)शोचादिना चित्तग्रहणस्य मूल्यदानम् (५४)। पात्रचीवरग्रहणम् (५५)। आसनप्रज्ञपनम् (५६)। पादधावनेनोपनिमन्त्रणम् (५७)। उदकेन च (५८)। वन्दनम् (५९)। सुखचर्याप्रश्नः (६०)। यथाशक्ति संरञ्जनीयकरणम् (६१)। अनुरूपशयनासनदानम् (६२)। संघस्थविरमुपसंक्रामेत (६३)। निःश्रयग्रहणे ॥ चे[दि]नभियुञ्जीत (६४)। वृद्धश्चेत् शयनासनस्यास्य दाने तद्वारिकम् (६५)। न सहसा शयनासनं याचेत (६६)। परिपण्डादानमन्तस्य चीवरे न्यस्तोऽप्रतिविधानं आरापदकैस्तत्संग्रहः (६७)। परिवासाम्यनकाशे वृक्षाद्युपरि सप्ताष्टान्यहानि पञ्चाशीतीत्यपरं शोचयित्वा शयचीवरं भुञ्जीत (६८)। प्रवेदिते श्मश[ा]निकोऽहमित्युपनिमन्त्रितः प्रवेश्यं विहारकुलयोः परिभोगश्चानुत्सृष्टस्वीकारस्य श्मश[ा]निको भजेत (६९)। न सांघिकं शयनासनं परिभुञ्जीत (७०)। आव्यामान्ताचैत्यं परिहरेत् (७१)। धारयेन्मशकवारणम् (७२)। ऊर्णां सणं कर्पासं नतुकं पत्रमञ्जरीश्च (७३)। न हस्त्यश्वगोवालादिमयम् (७४)। सर्वत्राकमलमृष्टत्वं चित्रोपचित्रताचार्यौशलिके दण्डे (७५)। मशककुटिश्च (७६)। उपरि शटकवितननम् (७७)। दण्डिकायां बन्धनेन (७८)। चतुर्धि(? द्वि)हस्तकस्य (७९)। पटकेन परिवारणं द्वादशहस्तकेन (८०)। सावष्टम्भम् (८१)। अथास्य शयनासनेऽवष्टम्भः (८२)। द्वारस्य करणं विकर्णकस्य (८३)। वीजनं धर्मे प्रतिविधिः (८४)। धारयेद् विधमनम् (८५)। वारुटंटे(?)तालवृन्तं वा (८६)। न चित्रोपचित्रम् (८७)। संघोऽन्यदपि (८८)। चैत्ये मणितालव्यजनस्योत्पन्नस्य दानम् (८९)। श्रावकस्यापि (९०)। धारयेद् स्तूपबिम्बोपधानचतुरस्रकानि (९१)। पुत्रदारलाभे दातृवशेन प्रतिपत्तिः (९२)। मोचनं चेदस्यौटं तावतो निष्क्रयत्वम् (९३)। कल्पये[त्] पुनर्निर्यातनम् (९४)। वृक्षे निर्यातितस्यालङ्कारश्चेत् तस्यैवोत्सवेऽलंकरणोपस्थापनम् (९५)। भित्तौ लु(?)पने चेच्चित्रणाय (९६)। न चेत् स्तम्भे च नवकर्मणे (९७)। भूमौ (९८)। अग्निशालायां प्रज्वालनिकाकरणम् (९९)। लोहलाभस्य वा (१००)

भैषज्योपस्थापनं ग्लानकल्पिकशालायाम् (१)। भक्तशालायां भक्तकरणम् (२)। पानकस्य पानीयमण्डले (३)। जेन्ताकशालायां जेन्ताकस्य स्नेहलाभस्य वा (४)। स्नेहलाभस्य मण्डलवाटे स्थापनशालायोः (? याम्) (५)। जातकेन(?)-खनं वा (६)। वेदीचंक्रमद्वारकोष्ठकश[ा]लादेषु भाजनम् (७)। पुष्करिण्या[म् ?] च (८)। स्थापनमस्यां चातुर्दिशसांघिकत्वेनेत्ययम् (९)। कल्पते रत्नार्थे भिक्षणम् (१०)। उद्घोषणं च ग्रहणे (११)। चक्रस्य दर्शनार्थं करणं घर्मवातवर्षोपद्रवेणास्पृष्टे कूप[ा]गारस्य द्वारवन्त(तः) (१२)। ष्य(?)वतः (१३)। महस्यान्ते चक्रस्य धारणम् (१४)। भाण्डगोपकेन लाभस्य गोपनम् (१५)। नानुद्दिश्य द्रव्यं शास्तृपूजायां दत्ते भिक्षुणीनां सांघिके प्रवेशः (१६)। पृगासामग्रे(?) कस्यां चक्रो श्रू(?)यणे स्थूलात्ययः (१७)। भाजनं भाण्डभाजकेन (१८)। संमतिरस्य (१९)। नाथि(?)क्रीप्यायां (२०)। संघसन्निपाते वर्द्धनेन (२१)। तस्यैवात्र सन्निपातगतमनुष्ठेयं संघस्थविरेण मूल्यस्य करणम् (२२)। मध्यमस्य (२३)। नातस्तस्य पात्यत्वम् (२४)। निश्चितस्य पुनरभूतिं वर्द्धनस्य पातनम् (२५)। नाक्रयिको वर्धयेत् (२६)। न स्त्रियम् (२७)। नादत्तमूल्यं परम्परि भुञ्जीत (२८)। संस्कुर्वीत वा (२९)। दशाधस्ताभिप्रमूल्ये दायादानां भाजनम् (३०)। दत्ते कस्यचिदविभक्ते मद्गान्सृतौ तद्वर्ग्यगामित्वं तदंशस्य (३१)। अर्हति निर्वाणाश्रयेन प्रव्रजितः शीलवां(? वान्) शतसाहस्रं वस्त्रं शतरसं भोजनं पञ्चस्तं कूटागारम् (३२)। संघद्रव्यश्च (३३)। आशैक्षात् (३४)। पृथग्जनोऽपि (३५)। न दुःशीलः (३६)। ऋणभूतं कुसीतस्य प्रतिग्रहोपजीवनम् (३७)। अर्हः पौद्गलिकविहारतल्लाभोपजीव्यन्तस्सीमतायां संघलाभे (३८)। लयने च नियतस्य (३९)। वारेणास्योद्देशः (४०)। पात्रविपात्रककंकशिक्षाविन्दुलाकुञ्चिकाशलाकसूचीनखच्छेदनककटच्छुभृङ्गारस्थापनकुठारीपचनिकासरकानामयोभाण्डेभ्यो भाजयितव्यता (४१)। मृद्भाण्डेभ्यः पात्रविपात्रकपचनिकाघटिकाकरककुण्डककुण्डिकापानीयस्थालकानाम् (४२)। मंचस्य समपादेरयोमयात्तस्य परिवर्त्यो (४३)। न काष्ठमयस्य रंगस्य मंचकादन्यस्य (४४)। अकथितस्य (४५)। कथितस्य रञ्जनीये विनियोज्यत्वम् (४६)। संघस्य यत् (४७)। अविक्रियताश्रागमविहारतद्वस्तुशयनासनानाम् (४८)। अनापेयत्वम् (४९)। अनधिष्ठेयता च (५०)। योगं भक्ताच्छादनेन पित्रोरुद्वहेत् (५१)। न चेल्लामस्य पात्रचीवरादतिरेकस्समादाय (५२)। असंपत्तौ भोजनोपनतेरुपार्धस्यादानम् (५३)।

॥ [ इति ] क्षुद्रकादिर्चीवरवस्तुगतम् ॥ २ ॥

## ( ३ ) सपृच्छक्षुद्रकादिगतम्।

पपर्ण(?)विभागज्ञानाय चीवराणाम् (१)। उपचयानाभेषु दानम् (२)।

रूप्येणेत्यपरम्[73]। न विनैतया दुर्लभाकूपपानीये देशे चारिकां चरेत्[74]। प्रस्फोटितचीवरोऽध्वगः स्नातवां(? त्वा) प्रक्षालितपाणिपादो वा गृहीतपानीयः पोञ्चितो(?)पानके(त्क)स्त्रिचीवरं प्रावृत्य शान्तेर्यापथो विहारं प्रविशेत्[75]। चतुरो वृद्धान् वन्दित्वावतिष्ठेत्[76]। प्राकृते प्रदेशे न्यशब्दः[77]। प्रासादिकः सुसंवृतेर्यः सप्रश्रयेनास्य प्रतिशामनम्[78]। नाज्ञायमान[ः]प्रतिशामयेत् सतीर्थ्यमपि[79]। पिध्वीतां(?) द्वारं न देयं मृगयते निवार्यो गृहान इति प्रत्यायितस्य प्रतीच्छयान्यु(?)लक्षितवस्तोपहृतौ विश्वासनस्तुताश्चोपनीतेन मर्मघायं सहाय इत्यादि प्रतिपादनया दास्यत्वम्[80]। अभिज्ञानसंश्रयणमविदितस्यापरेण विशेषगताद्युपायः[81]। अर्प्यमाणयातेनान्ते चेत् प्रमीलनम्[82]। प्रश्नस्यानुप्रमादासंपत्तये करणम्[83]। नाशने याचितस्याशुचिनाऽसंपत्तो(?)शोचादिना चित्तग्रहणस्य मूल्यदानम्[84]। पात्रचीवरग्रहणम्[85]। आसनप्रज्ञपनम्[86]। पादधावनेनोपनिमन्त्रणम्[87]। उदकेन च[88]। वन्दनम्[89]। सुखचर्याप्रश्नः[90]। यथाशक्ति संरञ्जनीयकरणम्[91]। अनुरूपशयनासनदानम्[92]। संघस्थविरमुपसंक्रामेत[93]। निःश्रयग्रहणे स चे[दि]नभियुञ्जीत[94]। वृद्धश्चेत् शयनासनस्यास्य दाने उद्धारिकम्[95]। न सहसा शयनासनं याचेत[96]। परिपण्डादानमन्तस्य चीवरे ध्वस्तोऽप्रतिविधानं आरापदकैस्तत्संग्रहः[97]। परिवास्याम्यवकाशे वृक्षाद्युपरि सप्ताष्टान्यहानि पञ्चाशीतीत्यपरं शोषयित्वा शवचीवरं भुञ्जीत[98]। अवेदिते श्मश[ा]निकोऽहमित्युपनिमन्त्रितः प्रवेशं विहारकुलयोः परिभोगश्चानुत्सृष्टस्वीकारस्य श्मश[ा]निको भजेत[99]। न सांघिकं शयनासनं परिभुञ्जीत[100]। आव्यामान्ताचैत्यं परिहरेत्[101]। धारयेन्मशकवारणम्[102]। ऊर्णा सणं कर्पासं नतुकं पत्रमञ्जरीश्च[103]। न हस्त्यश्वगोबालादिमयम्[104]। सर्वेत्राकमलमृष्टत्वं चित्रोपचित्रताचार्योशलिके दण्डे[105]। मशककुण्डिश्च[106]। उपरि शटकवितननम्[107]। दण्डिकायां बन्धनेन[108]। चतुर्धि(? द्वि)हस्तकस्य[109]। पटकेन परिवारणं द्वादशहस्तकेन[110]। सावष्टम्भम्[111]। अधास्य शयनासने ऽवष्टम्भः[112]। द्वारस्य करणं विकर्णकस्य[113]। वीजनं घर्मे प्रतिविधिः[114]। धारयेद् विधमनम्[115]। धारुटंटे(?)तालवृन्तं वा[116]। न चित्रोपचित्रम्[117]। संघोऽन्यदपि[118]। चैत्ये मणिवालव्यजनस्योत्पन्नस्य दानम्[119]। श्रावकस्यापि[120]। धारयेद् धूपिबिम्बोपधानचतुरस्रकानि[121]। पुत्रदारलाभे दातृवशेन प्रतिपत्तिः[122]। मोचनं चेदसौष्टं तावतो निष्क्रयत्वम्[123]। कल्पये[त्] पुनर्निर्यातनम्[124]। वृक्षे निर्यातितस्यालङ्कारश्चेत् तस्यैवोत्सवेऽलंकरणोपस्थापनम्[125]। भित्तौ छ(?)पने चेचित्रणाय[126]। न चेत् स्तम्भे च नवकर्मणे[127]। भूमौ[128]। अग्निशालायां प्रज्वालनिकाकरणम्[129]। स्नेहलाभस्य वा[130]

भैषज्योपस्थापनं ग्लानकल्पिकशालायाम् (१) । भक्तशालायां भक्तकरणम् (२) । पानकस्य पानीयमण्डले (३) । जेन्ताकशालायां जेन्ताकस्य स्नेहलाभस्य वा (४) । स्नेहलाभस्य मण्डलवाटे स्थापनशालायोः ( ? याम् ) (५) । जातकेन(?)-सनं वा (६) । मेढीचंक्रमद्वारकोष्ठकप्र[ा]सादेषु भाजनम् (७) । पुष्करिण्या[म् ?] च (८) । स्थापनमस्यां चातुर्दिशसांघिकत्वेनेत्ययम् (९) । कल्पते रत्नार्थं भिक्षणम् (१०) । उद्रोपणं च ग्रहणे (११) । चक्रस्य दर्शनार्थं करणं घर्मवातवर्षोपद्र-वेणास्पृष्ट्यै कूप[ा]गारस्य द्वारवन्त(तः) (१२) । दृष(?)व्रतः (१३) । महस्यान्ते चक्रस्य धारणम् (१४) । भाण्डगोपकेन लाभस्य गोपनम् (१५) । नानुद्दिश्य द्रव्यं शास्तृपूजायां दत्ते भिक्षुणीनां सांघिके प्रवेशः (१६) । पृगामामत्रे(?) कस्यां चक्रो श्रू(?)यणे स्थूलात्ययः (१७) । भाजनं भाण्डभाजकेन (१८) । संमतिरस्य (१९) । नाथि(?)क्रीय्याणां (२०) । संघसन्निपाते वर्द्धनेन (२१) । वर्षैवाग्र सन्निपातगत-मनुष्ठेयं संघस्थविरेण मूल्यस्य करणम् (२२) । मध्यमस्य (२३) । नातस्तस्य पात्यत्वम् (२४) । निश्चित्य पुनरभूर्ति वर्द्धनस्य पातनम् (२५) । नाक्रयिको वर्धयेत् (२६) । न क्लियम् (२७) । नादत्तमूल्यं परम्परि भुञ्जीत (२८) । संस्कुर्वीत वा (२९) । दशाधल्लाभिप्रभृत्ये दायादानां भाजनम् (३०) । दत्ते कस्यचिदविभक्ते वल्गान्मृतौ तद्वर्गगामित्वं तदंशस्य (३१) । अर्हति निर्वाणाश्रयेन प्रव्रजितः शील-वां( ? वान् ) शतसाहस्रं वस्त्रं शतरसं भोजनं पञ्चस्तूपं कूटागारम् (३२) । संघद्रव्यञ्च (३३) । आशैक्षात् (३४) । पृथग्जनोऽपि (३५) । न दुःशीलः (३६) । ऋणभूतं कुसीतस्य प्रतिग्रहोपजीवनम् (३७) । अर्हः पौद्गलिकविहारतल्लाभोपजी-व्यन्तस्सीमतायां संघलाभे (३८) । लयने च नियतस्य (३९) । वारेणास्योद्देशः (४०) । पात्रनिपात्रककंकसिकाबिन्दुलाकुञ्चिकाशलकसूचीनखच्छेदनकटच्छुङ्गारस्थापन-कुठारीपचनिकासरकानामयोभाण्डेभ्यो भाजयितव्यता (४१) । मृद्भाण्डेभ्यः पात्र-निपात्रकपचनिकाघटिकाकरककुण्डककुण्डिकापानीयस्थालकानाम् (४२) । मंचस्य रत्नमयादेरयोमयात्तस्य परिवर्त्यो (४३) । न काष्ठमयस्य रंगस्य मंचकादन्यस्य (४४) । अक्वथितस्य (४५) । क्वथितस्य रञ्जनीये विनियोज्यत्वम् (४६) । संघस्य यत् (४७) । अविक्रियताश्यागमविहारवद्वस्तुशयनासनानाम् (४८) । अनापेयत्वम् (४९) । अन-धिष्ठेयता च (५०) । योगं भक्ताच्छादनेन विनोदहेत् (५१) । न चेल्लाभस्य पात्रचीवरादतिरेकस्समादाप्य (५२) । असंपत्तौ भोजनोपनतैरुपार्धसादानम् (५३) ।

॥ [ इति ] क्षुद्रकादिचीवरवस्तुगतम् ॥ २ ॥

( ३ ) समृच्छक्षुद्रकादिगतम् ।

पपर्ण(?)विभागज्ञानाय चीवराणाम् (१) । उपचयानामेषु दानम् (२) ।

मपिटिप्य(?)कस्तदासः (५६)। उल्लपनकानाञ्च (५७)। दशापाशात् तयोर्वर्धिका-
करणम् (५८)। नासांघाट्यां छिन्नाधिष्ठाननियमः नासत्त्वे तद्रूपाणां प्रत्ययाना-
मच्छिन्नया ग्रामान्तर्गृहयोरनयोपवेशः प्रवेशश्च (५९)। एवं तीर्थ्यावसथे (६०)।
नैव सत्त्वप्रवेशः (६१)। न रोमविधं त्रिचीवरत्वेनाधितिष्ठेत् (६२)। नैतत् प्रावृति-
भोजने भजेत (६३)। स्वीकरणं विरलिकायाः (६४)। चातुर्विध्यमस्याः (६५)।
और्णिका क्षौमिका दुकूलिका कार्पासिकेति (६६)। अन्येषाञ्च लघूनां पटप्रवाराणां
निकटरोमप्रभृतीनाम् (६७)। कोचवस्य च (६८)। न लोमस्य विहेठेऽस्यान्यथा
प्रावृतिं भजेत (६९)। नानेनैवं प्रावृते चंक्रम्येत (७०)। नार्याणिकोचवप्रावारचित्र-
चिलिमिलिकास्वीकृतिं पुद्गलो भजेत (७१)। प्रतीच्छेच्चंक्रमे चिलिमिलिका-
प्रज्ञपनम् (७२)। न नित्यमेकयैव धारया चंक्रमणम् (७३)। शक्यतायां प्रति-
संस्करणम् (७४)। सेवनदण्डकार्गडकदानैः (७५)। अशक्यत्वे गोमयम्र(मृ)दा तत्रैव
चंक्रमे लेपनम् (७६)। धारणमन्येषां दानपतिविश्वासेन (७७)। धारयेत् प्रतिनिवसन-
संकक्षिका-प्रतिसंकक्षिकाः (७८)। परिस्कारचीवरञ्च (७९)। नास्य शौक्ल्ये सदशा-
पाशतायां वा दोषः (८०)। न सांघिकस्य (८१)। अधिष्ठाय तत्त्वेनानुज्ञाता चीवरधारणं
धारयेदुप(?)रां विकल्पा(?)नेकमपि (८२)। नास्थिरचित्तस्य विकल्पयेत् (८३)।
नानुपसंपन्नस्य (८४)। न प्रत्यक्षम् (८५)। न देशान्तरस्थतायां विकल्पस्य ध्वंसः (८६)।
ध्वंसश्च्युतौ (८७)। ज्ञातौ (८८)। विकल्पकस्यात्र स्वामित्वम् (८९)। न निःसृष्टं
स्वीकुर्वीत (९०)। भिक्षौ निःसृजेत् (९१)। न संघे (९२)। नाव्यक्ते (९३)।
याचनमदाने (९४)। ग्रहणञ्च बलेन (९५)। गन्धैः परिशुद्धस्य वाससः शोषयित्वा
परिभोगः (९६)। प्रस्फोट्य चूर्णैः (९७)। स्नेहेन विरूक्षयित्वा (९८)। न वर्षत्यभ्यव-
काशे सांघिकस्य (९९)। नधावनरञ्जनपात्रकर्मकाष्ठपाटनादिकर्म कुर्वताम् (१००)।
सम्यक्त्वं संल्पमनुक्तौ साहस्य व्ययचायनिक्षेप्त्रे मनोज्ञुन्मत्तका तज्जाति-
तद्गृहादातुं प्रतिगृह्णीत्(?त) (१)। प्रतिगृह्णीत प्रणायितात् पुत्रात् (२)।
श्मशानाच्च प्रतिनिर्वर्त्तितम् (३)। प्रतिमृगयते दानमस्य (४)। ग्रहणं पुनर्लब्धौ
स्तौपिकस्य छत्तेर्मूलफलेक्षुभ्योऽन्यस्य भक्तार्थस्योद्देशोपजीव्यस्य वा भाज्यत्वं
स्वीकाराय (५)। वर्षिकेन सीम्ना लाभस्य प्रवेशः (६)। न छिन्नवर्षत्वेनर्त-
त्वम् (७)। नोत्क्षिप्ततायाम् (८)। एकांशतैवावष्टम्भिद्रव्योऽपि तस्य (९)।
स्वसंख्यांशत्वमस्मिन्नष्टम्भानाम् (१०)। भूयस्त्वेनैवान्यत्रानेकत्रोपगतौ व्यव-
स्था (११)। वि(?द्वि)तृतीयांशत्वं श्रामणेरश्रामणेरिकयोर्लाभे (१२)। साम्यम-
भ्यवहार्ये (१३)। उपसंपत्प्रेक्षशिक्षमाणयोश्च (१४)। पुद्गलशो भिक्षुणीनामंशहरता
न संघशः (१५)। नानवच्छिन्नं भोजनमनुलम्भे भिक्षुणीनां भुक्तवत्त्वे तत्रा-
प्रवेशः (१६)। नासनोदकपिण्डपातेषु भिक्षो[ः] भिक्षुणीस्तोन (?) ज्येष्ठत्वम् (१७)।

आसनस्य वृद्धान्ते भिक्षुणीभिः सन्निपादे भुक्तिः [२७] । करणं सभिक्षुतायामशक्तौ तेषां भिक्षुण्या दक्षिणादेशनस्य सामान्यं चारयिष्यतीति चारकमाहारस्य प्रत्युपस्थितपादौ दानाय संघस्थविरो नियुञ्जीत [२८] । यथार्सभजनमित्यनलोक्य पर्षदं प्रभूत्यल्पत्वे भक्तस्य तदाख्यानपूर्वकम् [२९] । यथाविभवने त्वन्ययात्वे [३०] । न चानुद्धोपिते संग्रासमिति वृद्धान्त आदौ गृह्णीत [३१] । सञ्जीकृताधाहारस्योद्दिष्टेभ्योऽपरेषामागतौ तदावेदनम् [३२] । न त्रिचीनरदाने भिक्षुं प्रवर्तयेत् [३३] । नैतञ्जीयत्तायाम् [३४] । प्रतिदास्यत इत्यतोऽन्येन मनसा संघः प्रतिगृह्णीयात् [३५] । सान्तरोत्तरेण मृतच्छोरणम् [३६] । मध्येन [३७] । नावशिष्टेन [३८] ।

॥ [ इति ] सपृच्छक्षुद्रकादिर्चीवरवस्तुगतम् ॥ ३ ॥

॥ समाप्तं चीवरवस्तु ॥ ६ ॥

ॐ

## §७. चर्मवस्तु ।

मर्यादा मध्यदेशस्य [१] । पूर्वेण पुण्ड्रकच्छो नाम दावः पुरतः पूर्णवर्धनस्य [२] । शरावत्यास्तदुपाख्या नदी दक्षिणेन [३] । पश्चिमेन स्थूणोपस्थूणौ ब्राह्मणग्रामकौ [४] । उशीरगिरिरुत्तरेण [५] । धारयेत् प्रत्यन्त उप[ा]नहौ [६] । शयनासनगुप्त्यर्थं च [७] । एकपलाशिके [८] । अर्गडिकदानेन प्रतिसंस्करणम् [९] । न पुरान्तरस्य [१०] । सप्त पदान्यन्ततो गृहिणा परिभुक्ते बहुपुटौ अपि [११] । नाकल्पिकस्य कल्पिकमात्रार्थतायां तद्योगस्यं ग्रहणमान्तता [१२] । न चित्रोपचित्राम् [१३] । न वेशविषाणिकाम् [१४] । नाश्वत्थकरवीरपत्रिकाम् [१५] । न सुवर्णरूप्यप्रचिताम् [१६] । न कोचिकिचायन्तीम् [१७] । न किणिकिणायन्तीम् [१८] । न खिणिखिणायन्तीम् [१९] । न झिणिझिणायन्तीम् [२०] । अन्यद् वा शौटीर्यमुद्वहन्तीम् [२१] । न तिर्यग्वध्रिकत्वस्याकल्पिकत्वम् [२२] । धारयेत् पुरः पार्ष्णिपुटके [२३] । लालाम्बुज्ञाम् [२४] । मुण्डपूलां वा [२५] । पिण्डीमरजले च जनपदे खेलां पूला च [२६] । न मान्यस्य सन्निधावुपानत्प्रवृत्तिं भजेत [२७] । न सिंहव्याघ्रद्वीपिहस्त्याजानेयाङ्गस्य किञ्चित्कायेऽाम्यत्वम् [२८] । कक्षहस्तिरहुं (?) काश्च तदन्यचण्डमृगाणामप्येभिराक्षेपः [२९] । नोपानहमास्फोटयेत् [३०] । उदकार्द्रेण नतुकेनैनां विरजीभावाय पोञ्च(?प्रोञ्छ)येत् [३१] । धारयेदेनत् [३२] । प्रभीयादेनाम् [३३] । प्रतिगुप्तप्रदेशेऽप्र[ा]मादनस्तुनः करणम् [३४] । धारयेत् तदर्थमारां वद्धश्च [३५] । न शस्तीम् [३६] । न काष्ठपादुकामागेहेऽन्यत्रान्तर्गृहद(म ?)शुचिवृद्(?टयां) च [३७] । न वंशपत्रमुंजमौरीदर्भाणाम् [३८] । रञ्जो(?ज्जो)श्च [३९] । समानगो(?)णिते [४०] । निषीदेच्चर्मण्यभावेऽन्यस्यान्तर्गृहे [४१] । अत्राप्यत्र तद्रूपे-

प्यपि प्रत्ययेष्वनिपचव्यता प्रतिगृह्णीत(?त) वर्क्षचर्म चक्षुपे (!) [४२]। पादस्थाने प्रज्ञपनम् [४३]। गन्धकुटीद्वारे वोधस्य [४४]। उपानहोः प्रावरणम् [४५]। वाते निपद्या निपद्या च सर्वमर्दःस्वेतदित्यस्योपभोगः [४६]। रोमसंस्पर्शेनोपकर्तृतां विघात् [४७]। यहुपुटत्वेन चोपना(?पान)होः [४८]। अनेकोपरिष्ठेन चैके-नापि [४९]। नानसा(?श्मा)परान्तकेषु चर्म धारयेत् [५०]। न सिंहादेः [५१]। स्नाय्वस्थिदन्तमांसवंसा(वशा ?)नामपि तस्याकल्पिकत्वं यस्य चर्मणः [५२]। धारयेत् तृ(?ह)तिम् [५३]। कापायं माणकं वा [५४]। न चित्रोपचित्रम् [५५]। न नाभि-शास्तरणे कृत्वा सविधानमगाधमम्भोऽवगाहेत [५६]। शिक्षेत्(?त) तत्तु प्रविविक्ते प्रदेशे [५७]। न तद्गाधे रुरोगा(?)मपाश्रयेत शुक्त्वर्षभम् [५८]। अपाश्रयेत हस्त्यश्वमहिष्यचरान् [५९]।

॥ [ इति ] चर्मवस्तु ॥ ७ ॥

## § ८. भैषज्यवस्तु ।

### ( १ ) भैषज्यवस्तु ।

प्रतिसेवेत भैषज्यम् [१]। चातुर्विधमस्य [२]। ग्लानं प्रत्यप्रथमताम् [३]। सर्वं चोचमोचकोलाश्वत्थोदुम्बरपरुषकमृद्वीकखर्जूरपानानाम् [४]। तद्वच्छुक्तशुल्कद-धिमण्डोदश्वित्मण्डकानि दकभिश्राणि पट्टपरिस्रुतानि स्वच्छानि सुरसदर्शीनि शरकाण्डवर्णानि [५]। अयुक्तिः प्रागेवं [प]श्चादुपसंपन्नेन स्पर्शनस्य समानव्यं-जनेन [६]। हरीतक्यादेः पञ्चकस्य [७]। गुडस्य च [८]। अधिष्ठितस्यास्य भक्षणे ग्लानवस्त्वमक्षोद्धो(?)पधिवारिके नवकर्मिणाम् [९]। भक्तच्छिन्नकस्यात्र चाकालि-काभक्षणे च [१०]। पानानियामिकम् [११]। स्वच्छानि [१२]। अतत्त्वात् तद्द्रव्यस्य कालिकं चेदनुपसंपन्नेन मर्दनं परिस्रावणञ्च पटेन [१३]। दाडिमवीज-पूरकादन्येष्वेषु द्रव्यम् [१४]। कालिकत्वेऽस्य यामान्तः पर्यन्तः [१५]। अन्यत्वे यस्ति(?स्त)सिन् [१६]। अनतिवृत्तावेपो(?)तिवृत्तौ यतः सेत्स्येक(?) [१७]। तदस-दतिरिक्तकालाश्रितावरूढिमास्ते तस्यां चागम्यत्वाद् भविष्यतः शक्तानामन-धिष्ठेयतापत्तेः [१८]। प्रविष्टत्वमत्र रसचूर्णारिष्टयोः [१९]। सौवीरकस्य च स्वच्छस्य [२०]। मूलादिभैषज्यं शृतपच्ल(? ञ्च)मेतत् [२१]। सर्पिस्तैलमधुफाणितानि सप्ताहिकम् [२२]। सर्वेषां गुडखण्डशक(र्क)रादीनां फाणितत्वेनाक्षेपः [२३]। सर्पिष्टुं सुधायाः [२४]। तैलवत्त्वं वशानां पञ्च परिक्षतानाम् [२५]। मत्स्यशुशुमार(?)-मारर्क्षसूकराणाम् [२६]। आसम्भूयात् ग्लान्य उपयोगः [२७]। स्वस्थतायामासां ग्लान्यानिमित्तं याचते दानम् [२८]। अभावेऽस्य ग्लानकोष्ठिकायां कपा[यां]ज्ञन-योश्च [२९]। यावज्जीविकं मूलगण्डपत्रफलभस्मक्षारिश्राभिपार्थस्य [३०]। तद्यथा मुस्तं

पंचा हरिद्रार्द्रकमतिविषा [६१] । चन्दनं चविका पद्मकं गुडूची देवदारु हरिद्रार्द्रकम् [६२] । वासककोशातकीपटोलनिम्बसप्तपत्रपत्राणि [६३] । पुष्पानि(?णि) वासकनिम्बधातकीनागानां पद्मकेसरश्च [६४] । हरीतक्यामलकं बिभीतकं मरीचं पिप्पली [६५] । जतु [६६] । तद्यथा हिङ्गुसर्जरसः [६७] । स्तपः स्तपकर्णी स्तपाकरः [६८] । क्षारः [६९] । तद्यथा तिलपलाशस्वर्जिकायवशूकवासकानाम् [७०] । क्षारक्षारश्च [७१] । लवणम् [७२] । तद्यथा सैन्धवं सौवर्चलं विटं सामुद्रं रोमकम् [७३] । कषायः [७४] । तद्यथा आम्रनिम्बकोशाम्बशिरीषजम्बूनाम् [७५] । यावदास्ं दानं स्नात्वा पुन(?)रसं स्पर्ष(?र्शं) सकृत् स्नानमिति कषायदानम् [७६] । न विकृतभोजनस्य भैषज्यग्रहणेनान्तता [७७] । यावज्जीविकत्वमस्य [७८] । तदाख्यं पुनश्चारप्रस्तावौ स्तन्ययानया(?पानपा)यिनां वत्सकानां विषे तावुपकारौ [७९] । छाविका [८०] । काञ्चनपीतशालाश्वत्थोदुम्बरन्यग्रोधानां सा [८१] । मृचतुरङ्गुलादधोभूमेः साक्षी [८२] । श्राद्धादस्यादानमुपासकात् [८३] । तेन प्रतिग्रहणम् [८४] । मांसभैषज्यस्य चामस्य [८५] । ग्रहणं वस्तूना[म]वः सर्वस्य [८६] । कार्यत्वमस्य [८७] । जरकु(?)चोचारयवां(?)श्वेदकालोपयोज्यतायां पाचकृतभैषज्यस्य तदर्थं स्फरेयुः नान्यात् परिभुञ्जीत [८८] । पङ्कपरिश्रु(स्नु?)वा च दयक्षारी नान्यत् [८९] । कोकोश्चारसांसं(?)चेन्मांसभैषज्यस्य नान्यत् [९०] । पङ्कपरिश्रु(स्नु?) तैश्चेद्रसको नान्यत् [९१] । सान्येऽपि सद्भावस्तदधाचारस्य तस्माद् पूर्वकल्पेन स्वसाह्ये प्रवृत्तिः [९२] । नानापन्नस्य रूपान्तरमपूर्वरूपत्वं तस्मान्न विसंपाद्य(?)तस्य परतः स्वफल्पेनाकल्पनम् [९३] । सम्पद्यते प्रक्षालनेन शक्त(?सक्तु)तण्डुलेषु प्रवृत्तावस्थानस्य स्वमात्रसंख्यता गुडस्य [९४] । गुणत्वेन गुडवत्त्वे प्रतिपत्तिः [९५] । अनुत्थानमधितिष्ठते सन्निहितस्याधितिष्ठेत् ग्लान्यनिमित्तपरिभोगार्थम् [९६] । आश्वकालपर्यन्तात् [९७] । पूर्वभक्ते [९८] । प्रतिग्राहितम् [९९] । रस्योऽप्रतिग्राहितसन्निहितसम्पर्कस्तस्मान्निर्मोद्य हस्तौ [१००] । नोद्गृहीतसंनिहिताप्रतिग्राहितान्तरुपितपक्षभिक्षुपकेष्वधिष्ठानस्य रूढिः [१०१] । सन्निहितत्वं रसाच्छता परिवृत्तौ [१०२] । नाधरेण सार्धमधिष्ठितं परिभुञ्जीत [१०३] । निदर्शनं भैषज्यानुक्रमः [१०४] । प्रतिसेवेतांजनम् [१०५] । नाभैषज्यार्थम् [१०६] । योग्यमस्य भाजनम् [१०७] । रसाञ्जनस्य समुद्गकः [१०८] । गोणिकागुडिकांजनस्य [१०९] । पुष्पकल्कं चूर्णाञ्जनानां नाडिका [११०] । धारयेच्छलाकाम् [१११] । ताम्रलोहयोस्साध्व्यौ मणिभूतयोः [११२] । धारयेदाग्राधिकः कच्छपुटं भैषज्यनिधानाय [११३] । स्वसंभवतां तत्र मारीकृत्य स्थं वा निधानम् [११४] । नोपणतः कालेन कालं निहितस्य पौत्यानुपगतिः [११५] । छायातपे [११६] । वीर्यस्य शोषे हानिः [११७] । अनपनेव स्वयमुपपन्ने विनाशहेतोरभावेऽनु[प]संपन्नस्य [११८] । धारयेद् भैषज्यशरावकम् [११९] । भैषज्यकटच्छुकम् [१२०] ।

विपीदनके चानुपातपट्टकम् ⁽⁹²⁾। आबाधिको लवणम् ⁽⁹³⁾। नाडिकस्य साधु स्थानं साङ्गा(?) ⁽⁹⁴⁾। गोमयेन परिकथितस्य ⁽⁹⁵⁾। विधानकस्य बहिरहादोपाभावाय दानम् ⁽⁹⁶⁾। अतन्मयस्यैव ⁽⁹⁷⁾। गन्धपरिभाविनां मृदं(दां?) ⁽⁹⁸⁾। पानीयतापनार्थमयस्पिण्डम् ⁽⁹⁹⁾। उपयोजयेत् सर्वः ⁽¹⁰⁰⁾। शृङ्खलायास्तस्योत्क्षेपार्थं तत्र लगनम् ⁽¹⁰¹⁾। आर्द्रमृत्तिकया तापनकाले तदवष्टम्भः ⁽²⁾। नास्त्यामिषोपदेहस्य भावेऽवस्थानम् ⁽³⁾। कल्पिकस्य पूर्वं तापनं पश्चात् प[ा]रिमोगिकस्य ⁽⁴⁾। मज्जनं वस्तिचिकित्सितस्य ⁽⁵⁾। स्थूलमत्रान्यथाशक्यतायां व्युत्थापनस्य ⁽⁶⁾। मणेर्लोहस्य यात्र नाडी साध्वी नायसः ⁽⁷⁾। तद्वत् शस्त्रचिकित्सितम् ⁽⁸⁾। नतदन्यश्चिरावेधान्मुखे मज्जेत ⁽⁹⁾। नार्शसां छेदम् ⁽¹⁰⁾। अन्येनापि शस्त्रात् ⁽¹¹⁾। मन्त्रौषधाभ्यामेषां चिकित्सनम् ⁽¹²⁾। न प्रदुष्टेन चिकित्सयेत् ⁽¹³⁾। न रात्रिरभ्यवहारे विचिकित्सायामप्रतिरूपा ⁽¹⁴⁾। अनाशक्यमत्राप्रतिग्राहितसन्निहितयोरकल्पिकत्वम् ⁽¹⁵⁾। पानं विचिकित्सायै धूपवर्त्तेः नेत्रिकयास्य सम्पत्तिः ⁽¹⁶⁾। अयोमय्याः करणम् ⁽¹⁷⁾। द्वादशाङ्गुला साध्वी न तीक्ष्णा परुषा वा ⁽¹⁸⁾। स्वविकायां निधानं म्रक्षयित्वा सर्पिषा तैलेन वा ⁽¹⁹⁾। नागदन्तके चीवरवंशे वा तस्या[ः] स्थापनम् ⁽²⁰⁾। निर्मादनार्थमग्नौ प्रक्षेपः ⁽²¹⁾। करणं नस्तकर्मणः ⁽²²⁾। नस्तकरणे नास्य संपत्तिः ⁽²³⁾। स्य(? अ)तीक्ष्णचंचुकं साधु ⁽²⁴⁾। कारणमस्य ⁽²⁵⁾। प्रतिसेवेत वामनांसं भैषज्यार्थे ⁽²⁶⁾। शुद्ध्यै तस्यास्तत्कथत उपायः ⁽²⁷⁾। पिधानमक्ष्णोः पट्टकेन ⁽²⁸⁾। भावनं सुगन्धिनानुत्थानाय ⁽²⁹⁾। अपेततायां पलिगोध(?)स्य स्थितत्वे च मनोज्ञस्य पुरतः खाद्यभोज्यस्य मोक्षः ⁽³⁰⁾। स्थूलमन्यार्थेऽस्यास्याम् ⁽³¹⁾। सर्वत्र मानुषमांसस्य ⁽³²⁾। नोद्दिश्यकृतं ज्ञात्वा मांसं भुञ्जीत ⁽³³⁾। न व्याघ्रशेषम् ⁽³⁴⁾। न हस्त्यश्वनागानाम् ⁽³⁵⁾। नैकशुरशृगालमर्कटकाकेटककाकगृध्रबलाकामषकालिकोलूकतदन्यकुणपरसादकपक्षिवकजान्तु(?)ककोपलद्ध(?)गण्डूपककर्मीणाम् ⁽³⁶⁾। प्रतिक्षिप्तमयतामेति मांसं प्रतिग्राहयन्तं पृच्छेत् ⁽³⁷⁾। प्रथमोऽनेकत्वे ⁽³⁸⁾। अन्तरोहापनायाम् ⁽³⁹⁾। अपेयत्वं हस्तिमानुषक्षीरयोः ⁽⁴⁰⁾। अदुष्टं स्वग्व(त्र?)पदेहनस्यदानास्यञ्जनमभक्ष्येण ⁽⁴¹⁾। पेयत्वं ग्लानेन मूर्छितस्य ⁽⁴²⁾। सर्पिषा तैलेन वामयस्य ⁽⁴³⁾। निर्दोषममद्यत्वे ⁽⁴⁴⁾। संपत्तिरस्य क्वाथात् ⁽⁴⁵⁾। अक्षिप्तभर्जितयवस्यास्य भूमौ निहितस्य शुक्ते त्वोपगतिः ⁽⁴⁶⁾। भवत्यनुपगतिः ⁽⁴⁷⁾। मद्यत्वे क्वाथेन द्राक्षारसस्य ⁽⁴⁸⁾। नान्यवपृ(?)क्ततायामस्तित्वम् ⁽⁴⁹⁾। सत्त्वं वासनाभूतत्वम् ⁽⁵⁰⁾। पानं मद्यतद्वि(?)गमाय मद्यगन्धपरिभावितमूलगण्डपत्रपुष्पफलभैषज्यशुष्कचूर्णोदकस्य ⁽⁵¹⁾। समद्ये भाण्डे लम्बनस्थापनेन परिभावनम् ⁽⁵²⁾। रक्ष्यस्संसर्गस्तस्माद्न्ने विगतवेगतायाश्च ⁽⁵³⁾। तथा विरसीकरणेनाकालपाने चामिषेण ⁽⁵⁴⁾। प्रासादिकश्च साधु

तस्माच्छुक्लनत्रकेन सूतीकरणम् (७४) । अपानं ग्लानेन मद्यस्य कुशाग्रेणापि (७५) । अदानञ्च सर्वेणोपासकात् (७६) । चिकित्सार्थतां मुक्त्वेत्यप्रकृतिसावद्ये सर्वत्र शेषः (७७) । न लशुनं पलाण्डुं गृञ्जनकं वा परिभुञ्जीत (७८) । प्रतिगुप्तिप्रदेशे ग्लानः (७९) । नोपयुञ्ज[ा]नः परतश्च सप्ताहं लशुने पलाण्डौ त्रिरात्रमेकरात्रं गृञ्जनविहारं(?)परिभुञ्जीत (८०) । शयनासनम् (८१) । न वर्चकुटिं प्रवेशयेत् (८२) । न प्रस्रावकुटिम् (८३) । न संघमध्येऽवतरेत् (८४) । नोपविचारे चैत्यस्य (८५) । व्यामोच्य (?) प्रमाणम् (८६) । न गृहिभ्यो धर्मं देशयेत् (८७) । न कुलाक्षय(?श्रयं) संक्रामेत (८८) । न जनाकीर्णान् प्रदेशान् (८९) । स्नानमन्ते (९०) । अपनयनञ्च चीवराणां गन्धस्य (९१) । शोचनधूपनाभ्याम् (९२) । आयुष्करा दुर्भिक्षे (९३) । पाद्यवत् पाकवायसोरधिष्ठितं कल्पिकत्वेन (९४) । अधितिष्ठेत्र वृक्षमूलहस्तिशाल-तीर्थिकावसथराजकुलवस्तु भिक्षुणी वर्षकविहारमेथी(?ढी)द्वारकोष्ठकप्रासादजेन्ता-कोपस्थानशालाम् (९५) । अभ्यवकाशाग्निशालाचैत्यवस्तु गृहपतिवस्तूनि चै(?चे)-त्स्परः (९६) । साधनपचनस्याप्याज्ञाकारणम् (९७) । पश्चोपस्करणञ्च (९८) । चत्वा-राग्र(?)कालाः (९९) । प्रथमाष्टकान्यस्य मानत्वमूर्ध्वं(?र्ध्वे) सनवकर्मत्वम् (१००) । अन्यदानपगत(?)भिक्ष्वधिवासनत्वम् (१०१) । निरेतदोधिवसनाम(?) भिक्षूणां संप्राप्तिः (१०२) । आकृत्यान्तरारम्भप्रतिशान्तिभ्यां वत्त्वम् (१०३) । सर्वत्र संघः कर्मणा (१०४) । प्रथमयोः पुद्गलोऽपि (१०५) । नवकार्मिकः (१०६) । केवलोऽश्लाघा (१०७) । मापणतः (१०८) । अवधाने द्वितीये संघकुलानां भिक्षूणाम् (१०९) । यावन्तस्ता[व?]न्त स्तम्भिहिताश्चतुर्थे संमं(?)कल्पिकशालाम्बाद्(?) भावकवचनोदाहारतः (११०) । नान्ये कस्यैकस्य यानाया(?)विहारस्य कृत्यकरणमप्रासादिकम् (१११) । न पृथग्भूत-स्यैतत् कल्पिकत्वमुक्तम् (११२) । भुञ्जीत भिक्षु[ः] पक्वोद्गृहीतप्रतिगृहीते (११३) । पुरो-भक्तिकाम् (११४) । पेयान् सर्वदा (११५) । प्रागप्रतिग्राहितं प्रभ्नार्यो(?)स्थितः (११६) । उत्तिष्ठेत् तदान्यै (११७) । शिष्टम् (११८) । अभिनिर्हृतम् (११९) । निर्हरेदेव (१२०) । अनस्थिकानि (१२१) । तदाख्यम् (१२२) । तद्यथा द्राक्ष्यदाडिमखर्जूराक्षोटी(?ट) पाताम उरुमानरामापिकाकुरुमायिकानेकोचोचभूः(?) पिच्चितिकापुष्करञ्च तदाख्यम् (१२३) । तद्यथा विम्बं(?)मृणालिकावेट्टशालूकं पञ्चकर्कटिका (१२४) ।

॥ [ इति ] भैषज्यवस्तु ॥ १ ॥

## ( २ ) क्षुद्रकादिगतम् ।

न राज्यमुपार्धस्य प्रतीच्छेत् (५) । प्रतिगृह्णीयात् संघार्थं ग्रामान् (६) । क्षेत्रञ्च (७) । नैतदभ्युपेक्षेरन् (८) । मार्गेनास्य दानम् (९) । मार्गणं मार्ग्यस्य (१०) । कृष्टवतोऽस्य विरते नेयत्नम् (११) । प्रथमतरमात्मीयात् (१२) । रक्षणाय भिक्षूणां नियोगः (१३) । नाप्रज्ञायमानाय व्ययो भयान्यतरे गणनां मृगयेत् (१४) । अन्यत्र

स्मृतिसंप्रजन्यपुर[ः]सरस्तत्र प्रवर्तेत (५) । प्रतिगृह्णीयात् संघार्थमुपस्थायकात् (६) । यतो नागतिः शब्दस्य विहारे तत्र कल्पकारमापनम् (७) । देयत्वं भक्तस्य करणं चेत् कर्मणः (८) । गोमहिष्याजैडकहस्त्यश्वोष्ट्रगर्दभामधान्यभाजनं च न स्तूपस्यैषामकल्पनम् (९) । धारयेत् कलाविकालवणपातलिकाश्च (१०) । नाम्यामनुपानपङ्कुकाचान्यत् कंसभाजनं पुद्गलो धारयेत् (११) । उपस्थापयेदारामिकम् (१२) । ग्रहणं रक्षार्थं प्रतिपाद्यमानानामप्यन्यानां समानव्यञ्जनानाम् (१३) । आसक्तकण्ठचीवरकत्वमेषां वेषः (१४) । कल्यां वा प्रतिपालनमनुकम्पारतेन (१५) । ग्रहणं वत्(ज्)ज्ञात् पु(?सु)संकृतस्य (१६) । निषा (?)यत्वेन यान्ते (१७) । तैश्च कृतज्ञतया (१८) । नैतन्मूल्यं याचेत (१९) । स्वीकुर्यात् फललाभम् (२०) । घृततैलमधुफाणितघटान् (२१) । तद्भाजनञ्च (२२) । स्थापयेदेनामाधारके (२३) । अनुपभोज्यत्वमुद्धारप्रस्तावमद्य (?) घटानाम् (२४) । प्रतिजागृयात् संघार्थयोः साधनपचनयोः (२५) । नापार्श्वनिहितानां प्रागावात् पात्रस्य पिण्डाय प्रवृत्तौ भजेत (२६) । पिण्डोपधानं धारयेत् (२७) । अनाशंक्यमत्र लोहभाण्डाधारणे चासाधारणत्वम् (२८) । अकल्पिकत्वं च ग्लानाय चेलाभरणस्य (२९) । नाविशरावकेण पिण्डाय कुलं प्रविशेत् (३०) । धारयेदेनम् (३१) । निष्काश(?स) प्रवेशकौशले प्रयते[त] (३२) । अभिज्ञानकरणेन पिण्डापाता (?) च करादिना (३३) । न धर्मत्र[ा]णिज्यय[ा] जीवितं कल्पयेत् (३४) । शोचनमसंभवे जलस्य दध्यादिमण्डेन पादयोः (३५) । निषदनं पिण्डके (३६) । स्थापनमेकान्तेऽस्यवकाशे (३७) । राशीकृत्यापि (३८) । प्रमीलनमन्ते (३९) । करणं प्राभू(?)त्ये पाटिकानेकत्वस्य (४०) । शतपंचकशः (४१) । प्रतिवृद्धान्तमुपन्वाहारः (४२) । अधिष्ठापकानामपहर्तृत्वे वा करणमुद्देशः (४३) । प्रथमतरं भोजनव्यापारिकैः भक्तिः (४४) । यथा वृद्धिकया विपादनाय दापनाय च महासन्निपाते भिक्षूणामुद्देशः (४५) । निषीदेयुः द्वित्रावर्जा (?) यथेष्टमत्र भिक्षुण्याः (४६) । अल्पशब्दोऽस्यवहाराग्रं गच्छेत् (४७) । स्वपं धृतेर्यः (४८) । प्रासादिकः (४९) । एवं तिष्ठेत् (५०) । नाभ्यावहार्यं पादेनाक्रामेत् (५१) । न पदा पात्राधिष्ठानं स्पृशेत् (५२) । स्मृतिमुपस्थाप्याविक्षिप्तचित्त[ः] पिण्डपातं गृह्णीयात् (५३) । अनवकिरन् पात्रामात्रकम् (५४) । असंमिश्रयन्नेव (?) (५५) । अनान्वालयम् (५६) । सुप्रतिच्छन्नम् (५७) । अनिपातं कालमभिनिर्हरेत् (५८) । न येन भक्तिः ततोऽन्यस्य लब्धेः स्वीकारेऽस्त्ययुक्तत्वम् (५९) । निर्दोषतरं स्वभोजनेऽन्यप्रतीष्टेः (६०) । तदन्तर्गतरदन्योपनिमन्त्रणे निषण्णस्यानुज्ञातं तेनादत्तम् (६१) । अभिप्रेतेनार्थेन शब्दप्रयोगे व्यवस्थानप्रसिद्धेन (६२) । नान्तं विसर्जयेत् दृष्टिशीलसम्पन्नाभ्यामान्तस्यान्यत्र यथासंख्यं दानमतिरिक्तस्य चालोपाढ्‌ यात्राकारिणो ग्रहणम् (६३) । भोगश्च विनिपातनं

श्रद्ध[ा]देयस्य (७४)। मात[ा]पितृग्लानपुत्रस्या(?)पेक्षकुक्षीमतीभ्यो विनेयाकांक्षापिण्डपातं स्पृष्टवते गृहिणे च संप्राप्ताय संविभागश्च ततः करणम् (७५)। आलोपपिण्डां(?) स्थापयेत् (७६)। अव्यवच्छिद्य भोक्तारम् (७७)। तिरश्चे च दद्यात् (७८)। नानवशि(?सि)ते भक्त्यर्थमुपनिक्षिप्ताद् ददीत (७९)। न निमन्त्रणके श्रद्ध[ा]देयत्वेन पात्राधिष्ठानेऽस्योच्छिष्टाशिलां(नां?) यथा सुखकरणम् (८०)। नैवासिकानां बलिदानम् (८१)। तत्कल्पानुगत्या पूर्वाह्लादौ (८२)। भिन्नकल्पत्वे भेदेन (८३)। नावर्घको किलिकभावस्थामात्रं भक्षयेत् (८४)। नाकल्पिकत्वं मूलगण्डपत्रपुष्पफलखादनीयौदनकुल्माषमत्स्यमांसापूपक्षीरदधिनवनीतमत्स्यवल्लूराणाम् (८५)। अनाशङ्क्यमुद्गसार्षपमूलगण्डपत्रपुष्पफलादियवागूनामनिपेस्यत्वम् (८६)। ओजस्करत्वं दू(?धू)तस्योदकेनापि (८७)। नाकल्पिकत्वं इति गतस्य (८८)। कल्पते भाजने भोजनम् (८९)। यायां(?दान्यां) (९०)। शिलामये च (९१)। कृतभोजनेऽपि निःश्रितव्यापारो निर्मादनम् (९२)। भुक्तेऽपि (९३)। नापरेण सार्द्धमेकत्र भाजने भुञ्जीत (९४)। भुञ्जीताप्यन्यसंभवे भाजनानां भिक्षूणाम् (९५)। उद्धृतेऽन्यस्य हस्ते संप्रक्षिपेत् (९६)। श्रामणेरे च सार्द्धं परवद(?)योगे कल्पकारकानां पिण्डीकृत्य दानम् (९७)। ज्ञातिना सर्वत्र हार्दे(?)न प्रार्थितः (९८)। प्रतिगुप्ते प्रदेशे (९९)। रक्षत्वमनपेपू(?क्ष्य)प्रतिग्रहच्न्यस्तेनप्रतिग्राहितसंपृक्तेश्च (१००)। न सोपानस्था(?स्थो) भुञ्जीत (१)। आक्रम्य ग्लानः (२)। न नग्न एकचीवरो वा (३)। अनापत्तिर्ग्लानस्योपस्थायकोऽस्य गुप्तिं कुर्यात् (४)। संकाक्षिकां वस्त्रौ संश्रयेत (५)। गुप्तश्च प्रदेशम् (६)। नेदमितो वा देहीति भोजनार्थमुपविष्टः परिवेष्टारं बोधयेत् (७)। अनापत्तिर्ग्लानेऽनुक्तय(?मुक्त)स्य (८)। तद्यथा, मन्दाग्नौ पक्वस्यामस्य दीप्र(प्त)ाग्नौ ग्लानसंज्ञाम् (९)। स्त्रोपस्थाप्य भुञ्जीत भैषज्यसंज्ञामाहारे (१०)। स्मृतिश्च (११)। समुदागमसाद्दश्यपरिणतप्रत्यर्धिकत्वनिष्यन्दं प्रतीत्य विधिपरीष्टिपराधीनत्वम्म(?)व्यावाधिकत्वप्रत्येकगतत्वातिरास्थितमातिकल्पम् (१२)। उपस्थितस्मृतिः (१३)। अविक्षिप्तः (१४)। संप्रजानन्नल्पशब्दः (१५)। अकुर्वन्नेनम् (१६)। अनुत्थापयन् यवाग्वाम् (१७)। अमटमटायमानः (१८)। मृदुकरणं शब्दकृतामुदकादिना (१९)। न तद्गुप्त्यर्थं वाद्य(?)मानत्वे (२०)। न देशनाक्रियमाणतया प्रतिसंवेदितस्य (२१)। अत्यये कालस्य द्वित्रयोमार्थयोः (२२)। गाथां भुक्त्वा भाषेत (२३)। दक्षिणादेशन-धर्मदेशनयोः निमन्त्रणकं भुक्त्वा करणम् (२४)। निर्ज्ञाय भुक्तिवतां(?) सर्वेषाम् (२५)। अवलोकनेन (२६)। प्रथमेनानैकत्वे (२७)। अशक्ताचक्ष्येपणं प्रतिबलस्य (२८)। अकृते चेद् गमनप्रत्ययः परिवारदानं भिक्षूणाम् (२९)। चतुर्णामन्ततः (३०)। गमनप्रत्ययेऽत्र दन्तसात-

लोकस्य (५१) । नन्दोपनन्दयोर्दक्षिणादेशने नामग्रहणम् (५२) । निगिलेष्व(?) नाडि-फोकालोद्गरान् छित्रानादौ छोरयित्वा मुखं निर्माद्य (५३) । नैतन्नामिषम् (५४) । तस्मान्मुखसमकाले प्रचारितश्चोद्गारारामे निर्मादयेदन्यः (५५) । नाप्रज्ञप्ते प्रदेशे श्लेष्मानं छोरयेत् (५६) । न परिकर्मिते (५७) । नैतत् छन्दं वा स्थविरस्य पुरतष्कुर्यात् (५८) । न सुज्ञानस्य (५९) । न पुनः पुनः शिष्टस्यापि (६०) । अन्येनाशक्तौ प्रक्रमणम् (६१) । नान्यस्यास्पर्शकरणम् (६२) । नक्ताध्यक्रमश्च (६३) । चंक्रमणे नान्येन वा प्रक्रमणम् (६४) । पात्रमस्य हस्तिपद्वुभ्रं साधारकस्य (६५) । वप[?] स्थापयेदेनम् (६६) । क्षोढकवालुकछायिकानां धारणं मक्षिकाणां प्रतिविधेः (६७) । अदुर्गन्धीभावप्राणकासंभवाय कालेन कालं शोचनं शोपणञ्च (६८) । तत्कालार्थमपरोपस्थापनम् (६९) । अविघातार्थं कोणस्तम्भपार्श्वे विहारस्य (७०) । चतुर्णामपि श्लेष्मकटक(?कानां) स्थापनम् (७१) । न सशब्दं वातकर्म कुर्वीत (७२) । नाधो वृक्षस्योच्चारप्रस्तारम् (७३) । मुक्तानिरवकाशत्वं तैरड्ड(?ट)व्याम् (७४) । कण्टकिनश्च (७५) । करणं वर्चष्कुटेः (७६) । विहारे चेदुत्तरपश्चिमे पार्श्वे (७७) । क्षोमस्य तमङ्गस्य वा (७८) । कण्टकिनामधो वृक्षाणां रोपणम् (७९) । पादकयोरुपछिद्रमुपरिदानम् (८०) । कुण्डिकास्थानकरणम् (८१) । विकर्णाकारया द्वारम् (८२) । कनाटस्य दानम् (८३) । कटकार्गडयोश्च (८४) । स्पन्दनं प्रविविक्षवा (८५) । स्तुते तत्र च प्रविष्टेन (८६) । सुसंगृहीतचीवरः प्रविशेत् संव्रज[ा]नन् (८७) । मध्ये निषीदेत् (८८) । शनैरालिपनकुटिपादुकं कुर्वीत (८९) । नानागतमागमयेत् (९०) । नागतं विधारयेत् (९१) । न तत्प्रतिबद्धकार्यादन्येनर्थं(?न्यर्थेन?) तत्समीपे तिष्ठेत् (९२) । प्रतिदिनं शोचनमुपधिवारिकेन (९३) । मृत्पात्रोपस्थापनञ्च (९४) । नाप्रज्ञप्ते प्रदेशे प्रस्रावं कुर्यात् (९५) । नानेकत्र (९६) । प्रोढौ गर्तायां स्रानयेत् (९७) । करणं प्रस्रावकुटेः (९८) । पार्श्वेऽस्याः (९९) । तमङ्गस्य (१००) । प्रनाडिकादानम् (१०१) । समानमितरत् (१०२) । करणं छिद्रपीठस्य चोदनारोगे (१०३) । संवर्तनेन बालस्य (१०४) । असंपत्तौ छेदनम् (१०५) । सामन्तके दुःखनं चेत् पात्रवैभङ्गुकानां दानम् (१०६) । रक्ष्यो भूमिनाशस्तस्मादप्कर्य(?)करस्य (१०७) । नान्धु(?त्थु)चासाधु (१०८) । कालेन कालमदुर्गन्धतायै शोचनम् (१०९) । शोपणं प्रक्षणञ्च कटुकतैलेन (११०) । तत्कालार्थमपराजेनम् (१११) । असंपत्तौ पतलिकाधारत्वेनोपयोगः (११२) । कृत्वोच्चारं तत्करणशुद्धेत् (?) (११३) । न तीक्ष्णेप(?न)तृणकुर्चकेन वा (११४) । नतुकपत्तलिकपत्रवैभङ्गुकलोष्ठकाष्ठानामत्र साधुत्वम् (११५) । द्वाभ्यां च मृद्भ्यां शोचयेत् (११६) । प्राक् स्थापिताभिः प्रविभागेन मृद्भिरुत्तरः शौचः (११७) । सशनैर्मन्दमन्दमनाशयताविस्कम्भिनाचमनिकापादुकाम् (११८) । सप्तभिर्वामस्य (११९) । सप्तभिरुभयोः बाह्वोः शोचनम् (१२०) । पुनः हस्तयोर्मृदा (१२१) । अपरायां[ः] कुण्डिकायाः पाद-

प्रक्षालनम् [९८] । निर्दोषं शू(?)ते कुक्षेः प्रागन्तात् प्रोञ्छनमात्रं कृत्वासनं नातोऽन्यः [९९] । सत्युदके नानान्ते निषीदेत् [१००] ।

॥ [ इति ] क्षुद्रकादिभैषज्यवस्तुगतम् ॥ २ ॥

## ॥ समाप्तं भैषज्यवस्तु ॥ ८ ॥

# §९, कर्मवस्तु ।

## ( १ ) कर्मवस्तु ।

विघ्युत्क्रमे कर्मणो रुद्धिः [१] । नाथाप्यश्रुतो(?) [२] । नारुद्धिं कुर्यात् [३] । शक्तिराचनाप्रतिमोक्षोद्देशप्रवारणात्तत् [४] । नाधर्मेण कुर्युः [५] । न व्यग्राः [६] । न गणस्य [७] । नासंघभूताः [८] । विंशतिप्रभृतीनामावर्त्तने संघत्वम् [९] । उपसंपदि दशप्रभृतीनाम् [१०] । विनयधरपञ्चमादीनां प्रत्यन्तेष्वसंपत्तौ [११] । शिष्टे चतुःप्रभृतीनां द्विरुक्त्यं भिक्षुणीनाम् [१२] । कर्मणि प्रवारणं भिक्षुसंघेऽपि [१३] । पोषधसंपन्नसामग्र्याणां तेन [१४] । छन्दपोषधहरणेन तत्संपादनम् [१५] । द्वयोरत्र व्यापृतिः [१६] । प्रतिबलत्वमनयोः [१७] । अभाव एकस्याग्रहीतुभि(र्भि)क्षुसंघेन नियोगो भिक्षोः [१८] । द्वारकोष्ठके तेनावस्थानम् [१९] । पलायमानस्य संज्ञपनम् [२०] । तैनास्यैतत् [२१] । न पलायनम् [२२] । अज्ञातो नाम गोत्रप्रश्नः [२३] । मानास्य-वर्चणं(?) द्वयोस्साग्रे तयोः [२४] । उपसंपादनञ्च [२५] । द्वादशवर्गोऽन्नासाम् [२६] । सपूर्वसंधृतिद्वयपर्षद्नलपर्षदुपस्थानसंधृतिदानेऽन्तः संघस्य [२७] । कल्पिकत्म-शक्तौ कर्मकारिकायानितीरितं तया भिक्षुणा कृतं वचनम् [२८] । यस्मात् तूष्णीमित्यतः प्राक् [२९] । नासन्निपादस्यस्य पूरकत्वम् [३०] । न यस्य क्रियते तस्मादस्त्त्वं पूरकत्वस्य छन्दपरिशुद्धिर्निधेः [३१] । अर्हत्त्वमनयोः [३२] । नानुपसंपत्कपक्षत्वा(?)नन्तर्यकृत्पापदृष्टिभूम्यन्त-जसम्मतिप्रकारकत्वेन [३३] । नानासंवासिरावम् [३४] । सस्खलितस्य च [३५] । संवरकरणीयेनापि [३६] । भवत्यधिष्ठानेन शुद्धत्वम् [३७] । न शक्यतायाम् [३८] । शक्यत्वं तद्दानने शुद्धप्रायश्चित्तिकप्रतिदेशनीयदुष्कृतप्रतिकरणस्य प्रतिग्रहीतृसद्भावे देशनामात्र-कत्वात् [३९] । यथा संघमापन्नो प्रतिपद्येत [४०] । न्याय्यमेवं नाशनं चैकस्य [४१] । प्रतिकरणश्चानेकधा [४२] । नैषां कर्तृत्वम् [४३] । उद्देष्टृत्वं सापेक्षं प्रतिक्रियायाम् [४४] । वर्तमानस्य नातोऽन्यै(?)भिः सध्रुवं इर्युः [४५] । उत्सृज्य वर्जितमनाहृत्तम् [४६] । उत्क्षिप्तश्च सकर्मणि [४७] । अन्न(? न्त): पृच्छार्थं ज्ञप्तिप्रभृतौ चोपपद्यमानम् [४८] । दर्शनोपविचारस्थातायां सांमुख्यस्य [४९] । निवे(?)दनेनानुत्थापनस्य तत्करणीये संपादनम् [५०] । असंमुखीभूतस्य विहारो उन्मत्तकानन्दनानालपनासंभोग-

संभृतयः । नाज्ञपिते तदर्थे वाचना । तत्सीमान्तर्गतस्यार्हस्य पूरणे कायतः छन्दतो वा संनिपादेऽननुप्रविष्टत्वं प्रतिक्रोशन्ता च यस्य तत्कर्म ततोऽन्यस्य प्रतिकूलं चेत् धर्मे वाच्युतस्येर्यापथात् प्रकृतिस्थस्य संयतस्य वा चोत्सृज्यानभिज्ञसान्तराद् व्यग्रत्वम् । मृषावादप्रहृत्त्वमसंयतिर्वाचा । पैशुन्ये पारुष्ये संभिन्नप्रलापे च । अप्रकृतिस्थत्वमत्र चान्यत्र वा करणीये करणीयकृतौ च । च्युतिरीर्यापथाद् विप्रक्रमणचित्तेन प्रवृत्तस्यास्योत्सृष्टिः । संघे दृष्टिमाविष्कुर्वीत । नान्यत्र । नानुपसंपत्क[ः] । अनर्हे वा पूरणायाम् । नानग्नशेपत्वे । संमन्येरन् साधुतरबहुतरकारिणं संमतमपसार्य । न नियम्य कालं पौनःपुन्येऽन्यत्र वा । दध्युरन्यत्र यावदर्थं परिहारम् । शलाकाग्रहणेनाभावे संमतस्य भाजनम् । यस्य पूरणेऽनर्हत्वं शलाकाचारणेऽपि तस्य । संघभेदेऽस्य रुचिरनर्हे न चारणे शलाकानाम् ।

॥ [इति] कर्मवस्तु ॥ १ ॥

## (२) कर्मपरिभाषा ।

नाधिक्ये वाचनानामकृतत्वम् । अकृतत्वं ह्यापने । क्रियमाणतायां प्रक्रान्तावपूर्वस्य पर्वणो विकुपितत्वम् । पूर्णस्यानवशिष्टत्वे तत्कर्मसंघपरिमाणामभ्युत्थितानाम् । नावशिष्टत्वे । पुनश्चेत्तच्चिकीर्षाधिकोपनं वा च (?) । संघविज्ञपनेन । पुनर्भदन्ताज्ञप्तिं करिष्याम्यनुश्रावणञ्चेति । प्रतिनिःसृष्ट्यर्थो ज्ञपननासन(?) तत्स्वभावैषीयशिक्षासामग्रीतत्पोषधतीर्थ्यपरिवासतदन्यमानाप्यमूलापकर्षस्मृत्यमूढविन[य]दानोपसंपादनोपसंपादनसीममोक्षप्रणिधिकर्मार्बर्हणेषु त्रिर्वाचना स्वार्थातिरिक्तमंत्रोक्तिः । पुद्गले च पराऽर्थम् । निषण्णोऽस्योत्कुटुकिकया पुरतोऽतिरिक्तेश्च । रोचनं च । इष्टके पार्ष्णिभ्यां विरहोऽनुशिष्टानुपसंपदि । मञ्चरिकादौ स्त्रियाः वृद्धान्तेऽनन्यतन्त्रतायां संघे स्थितस्य परार्थे सप्रणतम् । अनन्तरमार्गे समनुशिष्टतायां रहसीत्येकम् । द्रव्याधिष्ठानञ्च । तत्रं विकल्पनस्य । गृहीत्व[ा] तदेतत् । पात्रमपव्यं वामे पाणौ प्रतिस्थाप्य प्रतिच्छाद्य दक्षिणेन पाणिना । अग्रत[ः] स्वस्याग्राह्यतायां कर्म । असंस्तुतौ संघेकद्वयोः पुद्गलस्य विज्ञाप्यत्वं भिक्षोः । रोहन्त्यसान्निध्ये चीवरस्य मनसा विकल्प उत्सर्गोऽधिष्ठानञ्च नानुत्सृष्टे पूर्वेन । वास्थापे (?) चैकाधिष्ठानं तदाश्रयोपसंपत्तिपूर्वकम् । कृतैकांशोचरासंगत्वम् । समागतत्वे भिक्षूणाम् । सामीच्य तदर्हत्वेः (?) वचनीयतायाः[ः] स्वार्थमन्त्रस्य । अशिष्टौ च रहसि । ससांधाटितायामुपसंपत्संनिपादे(पाते?) । आदौ त्रिःप्रगृहीताञ्जलित्वं तादर्थ्ये दिवसारोचनं च । औपयिकमित्यन्ते स्वार्थं विज्ञप्तेन वचनं

पुद्गलश्चेत् [९८] । स्वार्थे तदन्वितरेण [९९] । छन्दद्वेषमोहभयगतिविरहितस्य शक्तस्य कृताकृतस्मरणे संमतिरुत्साह्य [१००] । कृताकृतवेदनं स्थिते [१०१] । वर्धत्ववर्धव्यमानतायां सीम्नि प्रतिपत्तिः [१०२] । गण्ड्याकोटनपृष्टवाचिकासमनुयोगाभ्यां सन्निपादकेन सन्निपाधानां बोधनम् [१०३] । तस्य तदर्थमासनं प्रज्ञपनम् [१०४] । संमतस्य तत्कार्यार्थतायामेतत्त्वम् [१०५] । सर्वत्र यथा वृद्धिका (?) [१०६] । रुच्याग्राह्येऽग्रत्वम् [१०७] ।

[ इति ] कर्मपरिभाषा ॥ २ ॥

॥ समाप्तं कर्मवस्तु ॥ ९ ॥

## § १०, प्रतिक्रियावस्तु ।

### ( १ ) प्रतिक्रियावस्तु ।

**नाप्रतिक्षुताश्यपनजप्त(?जं क)र्म प्रत्यनुभवेत्** [१] । उत्सृज्य पोषधं प्रवारणाश्च [२] । न सीमान्तरस्थस्य कस्मिंश्चिदङ्गत्वम् [३] । ध्वंसस्तद्गतौ साद्य गतस्य [४] । उभयस्थत्वमेकस्मिन्नेकत्र पादे परस्मिन् परत्र [५] । सर्वांसेऽवष्टम्भिनि स्थितस्यावष्टब्धे [६] । रूढिरेवमनेकत्रोपगतेः [७] । अर्हत्वमनेकशयनासनग्राहे [८] । यथेष्टमस्य वस्तव्यता [९] । न व्यग्रकारित्वं जिनस्य [१०] । न पूरकत्वम् [११] । नाकर्मणा तत्करणीयस्योत्थानम् [१२] । कृतत्वं यद्भूयस्कृतत्वे वाक्यस्यानुचरस्य [१३] । नाकीर्तित्वे निमित्तानां बन्धे [१४] । पारिवासिके नान्तस्योपस्थानसंवृतेः [१५] । उन्मत्तकेन चोदेशस्य [१६] । ज्ञप्तिनङ्गेदानुष्ठानम् [१७] । अनङ्गमत्र भिन्नव्यंजनत्वम् [१८] । न हासभावेन कस्यचित् स्थूलमरूढिबुद्ध्या भेदोत्क्षेपयोः [१९] । दुष्कृतमसंघभूतत्वे [२०] । नान्येषां नानासंवासिकेभ्यो बर्हाणां पूरणे गणेन ज्ञप्तिवाचनयोः [२१] । नासंपन्नत्वेऽर्ह[ः] स्वसंघेन प्रत्यनुभवस्य [२२] । संपन्नत्वं ज्ञप्तिश्रुतावस्य नाविधिर्भव्यरूपे प्रतिनिधिना दूतेन प्रव्राजनम् [२३] । उत्तरश्चोपसंपादनात् [२४] । नाप्रतीष्टो दत्तत्वम् [२५] । ध्वंसोऽत्र याचनस्य [२६] । विधित्वं मेवकज्ञपनपूर्वकत्वेऽस्य [२७] । उत्क्षेपेऽप्येवत् [२८] । अप्रधानं परेणासमन्वाहाराद्युक्तो वधः [२९] । नार्थच्छेदानां क्रमव्यत्या(? त्यया)दरूढिः [३०] । अकरणीयत्वं भ्रे(?)पस्य [३१] । न व्यञ्जनान्तरसंश्रयात् [३२] । न भिक्षुभिक्षुणीत्वयोरन्यकर्मवस्तुप्रतिज्ञपिते चोदकेन कल्पयति सांमुख्यं प्रणिधिकरणम् [३३] । प्रतीतिमात्रेण सन्निपातादाने [३४] । अनङ्गमदर्शने व्याघातित्वात् सत्त्वस्य प्रतिज्ञानम् [३५] । अनकाशां करणे चायोगात् [३६] । संपत्त्यास्वयमनुत्थाने चोदकस्योत्थापनम् [३७] । अ[ा]कोप(?)रोपकपरिभाषकृतामलाभावासाभ्यां संघस्य चेतकत्वम् [३८] । राजकुलपुत्रकुलज्ञातिपुद्गलप्रतिसरणतामप्रतिसर्तवां संघस्याविभ्रतः [३९] । अकुर्वाणस्यास्यागारिकतीर्थिकध्वजधारणतीर्थ्यसेवानाचारचरणान्यशिक्षणञ्च भिक्षुशिक्षायामुत्कचप्रकचस्य

संघे रोम पातयतो निःसरणं प्रवर्त्तयतः समीचीमुपदर्शयतो विरमतो निमित्तादवसारणं याचिते । कर्मदानावर्हणोपसंपादनप्रतिप्रस्रम्भनो(?)न्मच्छनञ्च । कलहकारकतस् (?) जयेयुः कर्मणा । निगर्हणमभीक्ष्णसंघावशेषापत्तिकस्याप्रतिकृत्य । कुलदूषकस्य प्रवासनम् । अदानाकरणयोश्च तदर्थे संनिपातानकाशयोः । उद्धानने च तददृष्टेः । प्रतिसंहरणमनस् (?) पण्डितागारिकस्य । तत्क्षमणकमत्र कर्मणः स्थानेऽवसारणं प्रति प्रतीतायाम[ा]पत्तावप्रतिकृतायामप्रतिकार्यायां संवरेणादृष्टिमुद्धानयन्तमनिच्छन्तं प्रतिकृतिमनुद्घातुमनुत्सृजन्तं च पापिकां दृष्टिमुत्क्षिपेयुः । "इहैवैनामापत्तिं प्रतिकुर्वीथा अयमेव त्वासंघः प्रस्रम्भयिष्यति" इत्येनं ब्रूयुः । नापत्तिं प्रतिच्छादयेत् । नाम्नाऽन्ततः प्रवेद्यत्वम् । यथाकथचित् दुष्कृतस्य । प्रकृतिस्थे । अनन्यदृष्टौ सोपसंपदि । तुल्यव्यंजने । अनैवैतत्सोत्तरम् । कृतत्वमस्यैदंधर्मके । सीमान्तरस्थे च । संघे सर्वत्राज्ञापनजानाम् । "सन्निहिते तत्रास्य(?थ)मे प्रतिदेशनीयस्य गर्ह्यमायुष्मन्तःस्थानमापन्नो(?न्नः) सात्म्यं प्रतिदेशनीयन्त (?यं) धर्मं प्रतिदे[श]यामि" इति । नैतन्मभवत् । संवरकृतेरतो व्युत्थान मानसीतः । अन्य (?) तस्मै तदो (?) देशनात् । एकत्र । अनन्यदृष्टो(?ष्टौ) तत्र । असमावन्ये निकायतः । अभावे आपत्तितः । निःसर्गेणैचनपूर्वकानैः(?)कातः । संघे स्थूलात् सर्वत्र । पंचकादौ सशेषागताद् गुरुणः । अशेषागतादनवच्छिन्ने भूयसि । लद्घोर(?)स्याद्यतुष्कादौ । कृतवदन्तेऽत्रोद्युक्तस्यासंपन्नस्य(?)यत्वे कर्म । दुष्कारवत्त्वमूढकृतस्य प्रत्यापत्तौ संज्ञायमानस्य तेन । नामगोत्रोपसंहितमापत्तित्वात् कीर्त्तनम् । इयत्कालप्रतिच्छन्नतया वा संघावशेषायाम् । आवर्हणमतो व्युत्थानकृत (?) । चरितमानात्यस्य । षडहमादाय संघात् । अर्द्धमासं भिक्षुण्याः । गुरुधर्मातिक्रमेऽप्यस्य चरितत्वम् । असति प्रतिच्छाददोषे तद् रूढिः । परिवासेन तदपहतिः । तावन्तं कालमाद[ा]य संघात् । क्रियमान(?ण)तायामनयोस्तत्संघावशेषापदने (?) ध्वंसः कृतादानयोः । तस्मान्मूलोपक्रमत्वं दानम् । निर्वाह्य तत्प्रस्तुतम् । तस्मादरूढस्यास्य पृथक् तदानीमुत्थाप्यता प्रथमं च । प्रतिकार्यं तदान्तरम् । तस्मात् तादर्थ(?र्थ्य)स्यापि संश्रयत्वम् । अवरोध्यता चातिरिक्तस्य तत्प्रतिच्छादकालस्य । कर्मणान्यो(?)दानम् । आवर्हणाञ्च । तर्जनं चात्र ज्ञप्तिप्रथमवाचनान्तराले । निपतितस्य तृणप्रस्तारकेण । समुद्रे(?द्धे)जनञ्च । कृततोत्कीर्त्तनान्तरम् ।

॥ [इति] प्रतिक्रियावस्तु ॥ १ ॥

## (२) क्षुद्रकादिगतम्।

निष्काश(?स)नं दुःशीलस्य [98]। संघस्यात्र प्रगमः [99]। नासावेनदभ्युपेक्षेत [100]। अवसार्यत्वं नाश्रितस्य [101]। नासां मन्ये प्रणिधारणामवसारणस्य प्रणिहितौ रूढिः [102]। अवस्तव्यता दूषितस्थाने प्रवासितस्य [103]। सर्वत्रोत्क्षिप्तके संवासत्वासंभोग्यत्वे [104]। संज्ञयात्र व्यवस्थानम् [105]। अधर्मपक्षस्यै(?)तिभिन्नतायामितरेण [106]। नान्यस्य [107]। नान्यत्रैत(?) प्रणिहिते [108]। अपाश्रयेणास्य वस्तव्यता सप्रेमकस्य [109]। विकृतेः क्रियमाणप्रणिधिना ध्वस्तेन च निष्कास्यमानेन भजने भाण्डस्य छोरणम् [110]। बला(?)निष्काशः(?सः) [111]। अवलम्बनस्य छेदनम् [112]। अपतनधर्मणा सत्रोत्पाटनम् [113]। संघेन तस्य प्रतिसंस्करणम् [114]। संप्रदास्य (?) [115]। असंपत्तौ वैहारात् [116]। न कलहकारकं निष्कास्यमानम् (?नं) वारयेत् [117]। अनिवृत्तौ कलेरुपशान्त्यै प्रयत्नादुत्क्षेपः [118]। विनिश्चयगते व्युपशमनेन [119]। निःश्रिते निःश्रयः प्रपतेत [120]। निमित्तस्यापि कलेरुपसंहारिणोत्क्षेप्यता [121]। संसृष्टविहारिणमपि भिक्षुणीभिरुत्क्षिपेयुः [122]। अवन्दनार्हसंवृतिमत्रोत्क्षिप्तस्य भिक्षुण्याप्(?:) कुर्युः [123]। उद्भवोऽन्यस्य प्रणिधिः निमित्ते तदर्थाभिसन्धिनान्यप्रकृतौ [124]। अरूढिरन्यथात्वं परत्र [125]। अनुत्थानमुत्क्षेपे [126]। स्थूलं ज्ञातमहापुण्यसत्रविनयमातृकाधरबहुश्रुतपक्षमनिवाराणां निर्दोपनागारिकाभिस्त्यादिपञ्चकावस्पण्डनेऽपि प्रतिसंहरणम् [127]। नाक्रोश्येनावस्पण्डनम् [128]। अनाशंस्यं स्वसाधारण्यम् [129]। अनुपसंपत्कस्यैषां प्रव्रजिते कर्तव्यता [130]। न गृहिणि [131]। पात्रस(?)स्याख्यातारं प्रति भिक्षोरभूतेन पाराजयिकेन [132]। क्रोशकं परिभाषकं न निकुब्जयेरन् [133]। व्यवस्थाकरणतः [134]। प्रज्ञप्त्या [135]। न निकुब्जितया तस्य गृहान् गच्छेत् [136]। नासनं परिभुञ्जीत [137]। न प्रज्ञप्तान् देयधर्मं(?) [138]। न पिण्डपातं प्रतिगृह्णीयात् [139]। न धर्मं देशयेत् [140]। यत् कर्म करणं तद्गतानां निकुब्जितत्वम् [141]। अनुचानमस्यास्वपक्षकुलं प्रत्योत्क्षिप्तकात् [142]। तैत(?)नमस्य केनचित् [143]। क्षमितवत्युन्मज्जनं क्षपनेन [144]। भवत्युत्थानमनुत्पन्नप्रतिच्छादचित्तस्यान्तिमातः [145]। शिक्षाचरणेन [146]। तच्छायायाः संघतः [147]। कर्मणा दानम् [148]। यावज्जीव[म्] [149]। शुद्धिरेकस्य पुरतो देशनेन संघावशेषतो ह्रीमतः [150]। सत्रधरस्य विनयस्य मातृकायाः [151]। ज्ञातस्य च [152]। अशपतापत्तिव्युत्थानेन दण्डकर्मतः [153]। निकायतो नामाश्रापचेनामि [154]। समुत्थानं गोत्रम् [155]।

॥ समाप्तं प्रतिक्रियावस्तु ॥ १० ॥

## §११, कालाकालसम्पातवस्तु ।

### (१) कालाकालसम्पातवस्तु ।

अप्रतीतत्वे संघावशेषान्तर्धानेऽन्तास्थितप्रतिच्छादचित्तस्याशक्तवत्तायां कृते ने वा किं वा कीदृश्यं चेति स्मर्तुमनुपसंपद् कृतोत्क्षिप्तयोश्चानुत्थानं प्रतिच्छादस्य [1] । अष्टस्यावहारिकसंज्ञतायामापत्तेरस्यापराजयात् [2] । अप्रज्ञप्ततायां च [3] । नाज्ञातत्वेन स(थ?)द्धितत्वे वा [4] । अनभिज्ञतासंज्ञिनोऽपि [5] । भूम्यन्तरस्थितायां प्राचोऽपि [6] । ज्ञानवत्प्रतिच्छादे विमतिः संघावशेषत्वम् [7] । अ[।]चरणस्यापि साभूति(?) या प्रतिच्छादानुत्थानस्य [8] । दुष्कृतमनादृत्यैः (?) चरणोत्सर्गे [9] । तथैवायिकाया(?)चारे चात्र [10] । संभवे चाप्रतिकृतौ [11] । तदवस्थत्वं प्रत्यागतावचरणभूमेः [12] । शोधिते वस्तुनि सा(?)पानुष्ठानमनिर्ज्ञाने प्रतिच्छादकालस्यासंन्यमान(?)न्यूनत्वस्य संश्रपणम् [13] । चरितव्यतायां शुद्धान्तिकत्वोत्तरस्य [14] । चतुरो मासां(?सान्) शुद्धान्तिकमिति [15] । अपरिमात्वस्याप्रतिच्छादे [16] । संचिन्त्य शुक्रविसृष्टिसमुत्थानपरिमाणामिति [17] । यावतीष्यप्रायस्तावत्कीमिश्रमत्रानुष्ठितिः [18] । अपरिमाण इत्यनिर्ज्ञानेऽस्य संश्रयसंबहुलाः परिमाणवत्य इति प्राभृत्ये [19] । अतिरिक्तेन कालानाम् [20] । प्रभु(?)तिमत्त्वेन नाम्नाम् [21] । गुरुत्वतीप्राशयकृतत्वाक्यामादित्वेन [22] । परतोऽपरप्राक्सम्पन्नप्रतिचिकीर्षोत्पत्तौ शु[र्धी?]ग् दानमेकं चरणम् [23] । नास्य प्रतिच्छन्नतायां मानास्ये संभवः [24] ।

॥ [इति] कालाकालसंपातवस्तु ॥ १ ॥

### (२) पृच्छागतम् ।

नानन्त्येन्से(?ऽन्त्ये)होरात्रस्य प्रतिच्छादोत्थानम् [25] । नामावेऽह्नस्योद्भावनायात्मचित्तानां प्रतिच्छादः [26] । अभावत्वममत्यपक्रान्तिरशस्य [27] । तदर्थवशतयापि कृतौ [28] । विनार्थेन दुष्कृतम् [29] । प्रात्कान्त्या(?)त् [30] । अनुत्सृष्टत्वं प्रतिच्छादचित्तस्य तव(?चि)त्तानदोर्ष(?)मापत्तेः पराजितस्याप्रकृतौ [31] ।

॥ समाप्तं कालाकालसंपातवस्तु ॥ ११ ॥

ॐ

## §१२, भूम्यन्तरस्थचरणवस्तु ।

### (१) भूम्यन्तरस्थचरणम् ।

पारिवासिकमानांसचारिभ्यामभिवादनवन्दनप्रत्युत्थानांजलिसामीचीकर्मणां प्रकृतिस्थाद् भिक्षोरस्वीकरणम् [1] । मस्याम्यामकरणमितरैरपि तत्र वृद्धतस्य [2] ।

यदपरिहाणिकात्तोऽन्यथाऽनेन सार्द्धमचंक्रमणम् [3] । नीचतरासनकत्वादनिपादः [4] । पश्चाच्छ्रमणात्मकतातप(?)कुलानुपसंक्रमणम् [5] । अकल्पनमेकच्छद्ने शय्यायाः [6] । प्रव्राजनोपसंपादननिःश्रयदानश्रमणोद्देशोपस्थापनानामकरणम् [7] । प्रज्ञप्तियाचनयोश्चाप्रतीष्टिः [8] । कर्मकारकभिक्षुण्यववादकसंघवैश्वासिकसम्मतेः [9] । अव्यापारण(णं) प्राक्सम्मतेनापि [10] । अनववदनञ्च भिक्षुणीनाम् [11] । अनुद्देशः पोषधे प्रातिमोक्षस्य सत्यन्यत्रोद्देष्टरि [12] । अचोदनं विपश्या भिक्षोः [13] । अनपसारितस्य संघात् [14] । अकरणं सवचनीयतासकीलत्वयोः [15] । अस्थापनमववादपोषधप्रवारणाज्ञप्तिवाचनानाम् [16] । असंप्रयोगोऽनेन [17] । वर्जनं कृतदण्डनिमित्तस्य [18] । अन्यस्य चापराधस्य [19] । नापराध्यता सब्रह्मचारिषु [20] । प्रतस्य (?) निःसारः प्रवर्तितो भवतीति मनसिकरणम् [21] । काल्यमुत्थाय द्वारमोक्षो दीपस्यालक्कोद्धरणविहारसेकसंमार्गसुकुमारिगोमयकार्ष्यानुप्रदानानि [22] । धावनं प्रस्रावोच्चारकुड्याः [23] । पोष(?प्रोञ्छ)नमृतकालानुरूपपानीयोपस्थापनम् [24] । प्रणाडिकामुखानां धावनम् [25] । आसनप्रज्ञापनम् [26] । कालं ज्ञात्वा धूपतरकटच्छुकयोरुपस्थापनम् [27] । प्रतिबलता चेच्छास्तुर्गुणासंकीर्तनम् [28] । न चेद् भाषणकाध्येषणम् [29] । उप[ा]न्वाहृते गण्डीदानम् [30] । घर्मश्चेद् भिक्षूणां वीजनम् [31] । अन्त्यत्वमस्य सर्वोपसंपन्नानाम् [32] । कृते भक्तकृत्ये शयनासनस्य छन्ने गोपनम् [33] । पात्राधिष्ठानछोरणम् [34] । कालं ज्ञात्वा स्तूपानां संमार्जनम् [35] । सुकुमारिगोमयकार्ष्यनुप्रदानम् [36] । सामग्रीवेलायां प्रज्ञपनाद्या(?)गुणगतात् [37] । प्रतिबलता चेद् दिवसारोचनम् [38] । न चेदन्यस्य भिक्षोरध्येषणम् [39] । पादशोचनं भिक्षूणां त्रैकालिकं कालानुरूपेणाम्बुना [40] । अक्षणश्चानिच्छायां स्नेहोपसंहारः [41] । विहारेऽस्य प्रत्यन्तेऽर्हत्त्वम् [42] । अर्हत्त्वं सर्वत्र लाभे [43] । प्रतिजाग्रियात् कृष्णपक्षे [44] । तद्वदत्र तत्प्रभावैर्पीयशिक्षाचरणानाम् [45] । असंघे च [46] । परिच्छिन्नेषु च तदाश्रमपदोपगेभ्यः [47] । न बहुतां परिहरेत् [48] । स स्थविरप्रातिमोक्षतायै प्रयतेत [49] । न यन्त्यान्ते त्रिःप्रभृतयः सर्वथा तदाल्पचरणास्तत्र तच्चरेत् [50] । नान्यत्र प्रथमावरणेणा(?)नुद्गमयेत् (?) [51] । वर्षर्तु धृत्तमारोचयेताम् [52] । संनिपाते संघस्य [53] । प्रत्यहं न चेच्चिरं चरितव्यत्वम् [54] । अत्र त्रिचतुरः [55] । नैयानेनार्थेनाभस्पण्डयेत् [56] । कलहकारकागमनञ्च श्रुत्वा भयश्चेदतः प्रतिनि[ः]सृजेतां संघसन्निधौ पुद्गले वा [57] । अपगतौ भीतेरादानं तत्रैव [58] ।

॥ [इति] भूम्यन्तरस्थचरणवस्तु ॥ १२ ॥

( २ ) पृच्छागतम् ।

छेदस्तदहोरात्रस्य प्रकृतिस्थेन सार्धमेकच्छदने प[रि]वासिकमानाप्यचारिणोः शय्यायां बहि[ः]सीम्नि च [illegible] । अनारोचने च [illegible] । नासन्निधौ तत्सीम्नि श्राव्याणामस्योत्थानं निर्दोषं तदहरागतौ सीमान्तरे गमनम् [illegible] । न प[रि]वासिकेन सार्धमेकच्छदने पारिवासिकः शयीत [illegible] । न तीर्थ्योपनिवासस्यस्य तेन सार्धमत्र दोषः [illegible] ।

॥ [ इति ] भूम्यन्तरस्यचरणवस्तुपृच्छा ॥ १२ ॥

## §१३. परिकर्मवस्तु ।

नाप्रासिद्धिकस्य मूलत्वम् [१] । अरूढिरवसितप्रवारणोक्तौ प्रवारणास्थापनस्य [२] । तथा ग्लानकर्तृकतायाम् [३] । दूतेनापि [४] । ग्लानगतायाञ्च [५] । नैतत् प्रतीच्छेयुः [६] । आगमय त्वमायुष्म(ष्मन्)ग्लानस्त्वमप्रयोज्यम (?) इत्यायुसं(ष्मन्) भूतेति ग्लानोऽसाचनतुज्या इति प्रतिवेदयेयुः [७] । अनवगतस्वरूपतायां कृतस्य कर्तुर्वा चोदनस्य [८] । शिष्टेऽपि नाकाले प्रवर्तेत [९] । नानुपस्थास्य स्मृतिसंप्रजन्ये [१०] । नानेकान्ते [११] । नाकारितावकाशे [१२] । तत्रं प्रवारणस्य [१३] । अस्मृतौ स्मारणम् [१४] । अकरणेभ्यः वचनीयतामस्य कुर्यात् [१५] । सवचनीयं त्वायुष्मन् करोमि न त्वं योऽस्मदादानासादनवलोक्य अक्रमितव्यमस्ति मे आयुष्मति प्रणिहितं वचनायेति [१६] । आगच्छत्येव दमनथमन (?) चोद्यताम् [१७] । आलपनादेरस्यानुविनिवर्तनम् [१८] । तथापि पोषधस्थापनम् [१९] । ततोऽपि प्रवारणायाः [२०] । करणमस्य त्र(?)स्थापकैः स्थापितस्य तेन सार्धमुपसारणम् [२१] । कृतत्वेऽवकाशस्याप्रदुत्वं चेत् सकीलकरणम् [२२] । वक्ष्याम्यत्राप्युत्र वा वसेऽप्युत्र वा वस्तुनि यत्र चेष्टमित्यारोप्य चाम(पी)चि दर्शयित्वापराधमुत्सृजनेन [२३] । शीलदृष्ट्या चाराजीव वियत्या सर्वस्यास्य चोदनादेः क्रियायां रूढिः समूलकम् [२४] । न दुर्दु(?)लेन कुर्यात् [२५] । अकरणमत्र वस्तुनः सत्यत्वम् [२६] । क्रियानिमित्तानां परसंलापस्य सानुश्रावणस्येति त्रिविधं श्रुतम् [२७] । अमूलत्वमश्रद्धितस्य [२८] । कामोऽनेकत्वे ज्ञातुश्चोदनादौ [२९] । नाप्रवारणे तस्स्थापनम् [३०] । नापोषधे तस्य न न कृतौ कृतत्वे वा स्त्रीत्वे स्थापकस्यै[क?]तरस्य पुंस्त्वे स्थापितत्वं स्थापितता [३१] । न नष्टप्रकृतिना [३२] । नाशीलैक्येन [३३] । नानयोः [३४] ।

॥ [ इति ] पारिकर्मेण(?)वस्तुपृच्छा ॥ १३ ॥

## §१४. कर्मभेदवस्तु ।

( १ ) कर्मभेदः ।

न नानात्वाय संघस्य प्रमा(?म)विष्णुमकामं चोदयेदुन्मोटयेद् वा चोद-

यत्वम्[१]। न यत्र प्रतिविरोधस्तेन सार्धमभिनमने समासीत[२]। द्वित्रासनान्तरिमन्यत्र[३]। एवमितरस्तेन[४]। अन्तरितस्थानयोर्विहारस्य देयत्वं ग्राह्यता च[५]। धर्मे विनये चैतद्वतामधर्मे चेदभिनिवेशो ज्ञात्वा संघसामग्रीश्च विद्यते[६]। तस्मान्न तदन्यानां संभूय कृतौ कर्मणो रूढिश्च परस्परेणान्यग्रत्वम्[७]। कलिपरायणत्व एषा तद्विपक्षस्य चावन्द्यत्वमिदं धर्मभिः[८]। प्रत्युत्थानासनोपनिमन्त्रणासंलपनालपनसंमोदनव्यवलोकनालोकनानामप्यकरणम्[९]। लूहशयनासनानुप्रदानं हस्तसंव्यवहारकेन(?ण)[१०]। वचनेनान्यत्र सप्रतमित्यपरम्[११]। अत्यन्ते विहारस्य[१२]। मूढ्ढा(?) वयमिति वदन्तु यूय(?वय)मपि श्रमणाः शाक्यपुत्रीयाः स्म इत्यात्मानं प्रतिजानीध्वे[१३]। येषां चेदं वृत्तमियं वार्ता कारुणिको वः शास्ता येनैतदनुज्ञातमेतदपि वो न प्रापद्यत इति प्रतिवदेयुरन्यत्र[१४]। न भिक्षुण्यासनमोक्षं हापयेत्[१५]। ददीतोपासकपिण्डपातम्[१६]। नापसारितानामेषां सामग्र्यस्य विना सामग्रीलाभेनोत्थापनम्[१७]। न विना पोषधेन प्रकृतिस्थताप्राप्तिः[१८]। दत्त्वपिनं (?) कुर्युः[१९]। कर्मणैतत्[२०]। पूर्वं च[२१]। कल्पते सामग्रीमङ्गलार्थमापदि पोषधः[२२]। तस्यैव चात्र कालस्य निमित्तत्वम्[२३]।

॥ [इति] कर्मभेदवस्तु ॥

(२) पृच्छागत ।

कर्मणः कृताधर्मवादिभिरन्तःसीम्नि पृथक् तद्भेदोऽवद(?)चित्तेन[१]। रूढिरस्मिन् प्रतिस्वं कर्मणः[२]। नास्वपक्षं प्रति[३]। धर्मवादि कृतता संघस्य कृतत्वम्[४]। स्थलस्थैरत्र सन्नि(?) चेद् भिक्षुणीनामचोद्यत्वम्[५]। व्यग्रत्वमेषां धर्मपक्षैः[६]। ध्वंसोऽनुविधौ तस्य[७]। नैनं कुर्यात्[८]। अचोद्यत्वं पक्षापरपक्षव्यवस्थितस्य भिक्षुणीसंघस्य[९]। नैवं भिन्नस्य[१०]। समग्र्य(?)याचमानानां नियोज्यत्वम्[११]। धर्मवादिनि गामित्वं वार्षिकस्य[१२]। उभयसन्निपाते चाविभज्याप्रतिपाति(?दि)तस्य संघे वैभाज्यस्य[१३]। संघपरिमाणता चेत् तत्र तेषाम्[१४]। अनवा चेति रे(?)याम्[१५]। तदा यदीयस्योद् (?) संघे प्रतिपादनं द्वयोश्चेदुभयत्र[१६]। पुद्गलमो(?शो)ऽत्रांशित्वं न संघस्य[१७]।

॥ [इति] कर्मभेदवस्तुगते पृच्छा माणविके ॥ १४ ॥

## §१५. चक्रभेदवस्तु ।

ज्ञपनतो वा पृथग्भावस्य धर्मात् संघभेदः[१]। शलाकाग्रहणतो वानेनार्थेन[२]। अरूढिरस्यासंघपरिमाणत्वे भिद्यमानानामसत्त्वे चान्येषामन्तःसीम्नि संघपरिमाना(?णा)नामधर्मधर्मयोः तथात्वेन प्रत्यनगतावानन्तर्यम्[३]। धर्मसंज्ञिनोऽपि भेदे[४]।

॥ [इति] चक्रभेदवस्तु ॥ १५ ॥

## §१६. अधिकरणवस्तु ।

### (१) अधिकरणम् ।

चत्वारि संक्षो(?धो)पकरणानि [१] । पदार्थतथात्वे विप्रतिपत्तिर्वर्जनं सापत्तिका सामग्र्यदानं कर्मणि [२] । प्रथमनिमित्तस्यैकोतीकरणेन व्युपशमनम् [३] । अनेन च शुद्धिदाने च द्वितीयनिमित्तस्य [४] । तृतीयनिमित्तस्य प्रतिकरणे निश्चरण-निःसृतत्वादानेन च [५] । दापनेनान्त्यस्य [६] । सभ्यै(:?) स्वयमशक्तौ विवदित्रोः संप्रतिपादनम् [७] । भिक्षुभिरभिरुचितैः [८] । तयोरेकतः स्थलस्यानारोचनम् [९] । सम्मतिरेषां संघेन सातत्तिकानाम् [१०] । अनुत(? त)योर्निनष्कलहेऽत्र संमन्तव्य-ता [११] । लज्जिनः शिक्षाकामस्य [१२] । सुविनिश्चितस्य विनये [१३] । कुशलस्याधिकर-णवृत्तेऽध्याचारे च [१४] । विनिविष्टस्य [१५] । धीरस्यासंरब्धव्यं प्रस्थानस्य [१६] । समस्य [१७] । अवगन्तुः [१८] । प्रत्यायकस्य [१९] । विदुषः [२०] । अनुपशमने तैः [२१] । संघे निक्षेपः [२२] । असक्तौ तेन व्यूढानां संमतिः [२३] । अनूनानां संघपरिमाणात् [२४] । समन्व(?)त्वं वर्गस्य स्वतोऽसक्तौ व्यूढकेषु [२५] । अक्रि(? क)तावुत्तरस्यासक्तौ यत आदानतत्रनिक्षेपः [२६] । प्रत्यागते मूलसंघे नाधिकरणसंचारकसंमतिः [२७] । तेन सस्थविरे सप्रातिमोक्षेऽन्यत्र संघ उपनि-क्षेपः [२८] । त्रिमास्यात् कालस्य दानं वृत्तारोचनपूर्वकम् [२९] । य(?अ)स्यैतद् [३०] । प्रत्यर्पिते तेन सूत्रधरविनयधरमातृकाधरेषु [३१] । षण्मासाः [३२] । तैः प्रभाविते स्थविरे अपर्यन्तस्य [३३] । वर्जयेदसौ ततः स्वीकरणं कस्यचित् [३४] । औपाहुकदन्तकाग्रात् [३५] । एकासननिषदनैकचंक्रमणालापसंलापाश्च [३६] । अनुप(?)धूत इदं वदेत् तेषां च आयुष्मन्त अलाभानालाभादुर्लभो न सुलभा ये पूयं [स्वा]ख्याते धर्मविनये प्रव्रज्य कलहजाता विहरथ भण्डनजाता विगृहीता विवादमापन्नामायुष्मन्तः कलहो मा विग्रहो मा विवादः । नास्ति द्वयोर्युध्यतो जयः । एकस्य जय एकस्य पराजयः । नास्ति द्वयोर्धावतो जयः । एकस्य जय एकस्य पराजय इति [३७] । बहुतरमतेन संस्थापनमित्यपरः संप्रतिपादनप्रकारः [३८] । धर्मविनिश्चितावश्यसंभवो न शुचिविनिश्चितौ [३९] । विवदितृगतत्वात् तद्ग-तायाः प्रत्ययगतेः [४०] । स्वरमार्थिप्रत्यार्थिकैर्गृहीतत्वे प्रगाढं च व्याह(?)त्वे तेषां भेदाशंकितायामस्य संस्रयणम् [४१] । असंवरणकरणीये(? य)त्वेऽर्थस्य [४२] । परिक्षिप्तेषु स्थविरपर्यन्तेषु [४३] । मूलसंघेन [४४] । शलाकाग्रहणेनात्र मतस्य गृहीतव्यता [४५] । शलाकाचारकसंमतिः [४६] । शलाकानां तेनोपस्थापनं द्विप्रकाराणाम् [४७] । अजिह्मानङ्काकुटिलसुवर्णसुगन्धस्पर्शवत्त्वे धर्मशला[का]-स्विह रस(?) विपर्ययः [४८] । सन्निपातायारोचनं "संघे सर्वैः सन्निपति[त]व्यं

शलाकाश्चारयिष्यामि" इति । तथा चेद्धर्मशलाकाधिक्यसंपत्तिं मन्येत न छन्दानुप्रदानेन सामग्र्ये(? म्) चारयेत् । दक्षिणेन पाणिना धर्मशलाकानां चारणकाले ग्रहणं वामेनेतरासाम् । प्रतिच्छाद्यैनान्(? म्) पूर्वाः प्रकाशि(? शी)कृत्योपयाचनम् । स्थविरेण धर्मशलाका अजिह्मा अवंका अकुटिल[ा] सु[व]र्णा सुगन्धा सुखसंस्पर्शा गृहाणेति द्वयोर्वाचोरितरां मृगय तेन प्रयच्छेत् । यथा धर्मोद्भवं मन्येत तथा चारयेच्छन्नं वावृतं वा । "आयुस(? ष्म)न्, उपाध्यायेन ते धर्मशलाका गृहीता आचार्येण समानोपाध्यायेन समानाचार्येण । आल[प्त]केन न संलप्तकेन संस्तुतकेन सप्रेमकेन त्वमपि धर्मशलाकां गृहाण । मा ते एतैः सार्धं विरुक्षणं भविष्यति" इति वा कर्णमूले तन्तुनायम् । नाधर्मशलाकां गृह्णीयात् । नापृष्ट्वा सूत्रधरविनयधरमातृक[ा]धरान् । न भेदोद्भवक्षान्त्या नाधर्म्यस्य न जानन्नयो भविष्यत्ताम् । समत्वे महाश्रा[व]कमुद्दिश्यैकधर्मशलाकाग्रहणम् । नाधर्मेणाप्येवमुपशान्तं क्षोटयेत । निरवद्यचोदनशुद्धिदानम् । चतुर्धा तच्चोदनावस्तुमन्यानुष्ठानवशात् प्रतिकृत्यनपेक्षणादुन्मत्तकृतेन च । त्रिष्वाद्येषु स्मृतिविनयदानम् । अमूढविनयस्यान्ते । त्रयः सापत्तिकत्वात् संक्षोभाः । निर्विक्रियसविक्रियश्च द्विप्रकारः आदेशिकः सकलसंघगतश्च । पक्षापरपक्षव्यवस्थानेन । प्रथमतः प्रतिकरणं प्रतिज्ञाकारकः । संमुखविनयो द्वितीयस्मात् । तृतीयस्मात् तृणप्रस्तारकः । बहूनामर्थेऽन्यासंयेदेश्यानामेकेन प्रतिकरणम् । सह चानेकासाम् । यामिति चो(?)लिङ्गनतो ज्ञानोद्भासनेन । पक्षान्तरे च समेते । नाप्रतिज्ञातस्य वृथा वा प्रतिदेशनायारूढिः । कल्पते सङ्घेन चोदनम् । तथा चोदकत्वम् । अनियमोऽत्र संख्याविशेषाणाम् । संवृतत्वं कायवाग्भ्यां पिटकानां वेतृत्वमद्वीपत्वम् । विपर्ययतो धर्मविनयतद्विपर्ययाणां संघमध्ये संचिन्त्येति त्रिकान्वितं चोदकमाद(? द्वि)षेरन् । उन्मोटनदुःशीलविपर्य[य]दीपिनोः । संज्ञपनमवे(?) संज्ञपनमरे(?)न्तः पिटकानां धारयितुरनेवंविधस्य समनुयुञ्जीरन्नेनं भावः प्रतिबोधाय स्थानस्थापनेन । कालदेशेर्यापथानुष्ठानानि स्थानम् । अरूढिस्थानान्तरसंचारे कालव्यो(स्वो?)पसंपत्तौ च चोदनस्य । प्रतिज्ञानं चोदितेन निष्ठा दृष्टसत्यत्वे प्रकृष्टतरत्वे च गुणतोऽन्यस्य चतुष्प्रमाणीकरणं गृहिणोऽपि । संवादनं सात्य(?)त्वे । न संदिग्धतायापत्तौ ज्ञातत्वम् । प्रतिज्ञानवदतो निश्चयः । अप्रत्यवगतिरवज्ञानम् । प्रतिज्ञापय संघेऽजानता निर्धारणनियोगदानम् । तत्स्वभावैपतत(? पित)त्वादस्य तत्प्रभावैपि(? पी)यत्वम् । प्रणिधिकर्मरूपेणास्य के(को?)चिदाम्नातम् । असाधु वन्नू (? वं) धन्न-

विरोधात् [92]। अनिष्टेस्तव्युपशमथे(?मार्थे)नापवर्गीकरणस्य [93]। तर्जनीयादीनामेतत्त्वेनाव्यवस्थापनात् [94]। प्रतिपत्तो(?)ऽस्यैतदवज्ञानमिति च प्रत्यवगताद्दर्श-कत्वप्रतीतायाजातत्व(?)माचात् [95]। न व्युपशमार्थमौत्सुक्यं नापद्येरन् [96]।

॥ [इति] अधिकरणवस्तु ॥ १ ॥

(२) पृष्छागतम्।

सर्वशमथानां कृत्याधिकरणेऽवतारः [97]। नानर्हस्य पूरणे संघव्यवहृतौ सम्यक्त्वम् [98]। सोपसंपत्कानामेतरे(? मेवैर)धिकारः [99]। अर्हत्वं पुंसां क्लैब्ये [100]। व्युपशान्तत्वं च्युतौ जीवितादुपसंपदो वा [101]। वर्ज(?र्ज्य)तापत्ता-धान्यपक्ष्यता (?त्वा)त् [102]। प्रक्रान्तावन्येन दीर्घरोगजातस्य स्पृष्टौ वा [103]। अर्थादायिनोऽभियुक्तस्य वा [104]।

॥ [इति] अधिकरणवस्तुपृच्छा ॥ २ ॥

॥ समाप्तश्चाधिकरणवस्तु ॥ १६ ॥

## §१७. शयनासनवस्तु।

### (१) शयनासनवस्तु।

#### (१) वन्द्याः।

परः प्रातिमोक्षसंवरेण प्रव्रजितस्य वन्द्यः [1]। समानश्च वृद्धः [2]। अनन्य-व्यंजनः [3]। पुमांश्चाहीन[ः] स्त्रियाः (? यः) [4]। भूम्यन्तरस्थव्यक्तभिक्षुणी-दूषकाधर्मपक्ष्य नानासंवासिकानन्तर्यच्छायिवसमापन्नान्यप्रान्यचित्तपृष्ठाभिमुखा-न्तर्गृहभक्ताग्रस्थवर्जम् [5]। आगारिकस्य प्रव्रजितः [6]। वृद्धः सर्वस्य [7]।

#### (२) विहारकरणम्।

कुर्वीत विहारम् [8]। एकस्य गन्धकुटेर्मध्ये पक्षस्य कर्तव्यता [9]। तदभिमुखं द्वारकोष्ठकस्य [10]। चतुरस्रस्य साधुत्वम् [11]। त्रिशालस्य च [12]। प्रति-गृहीत [13]। वसेद् विहारे [14]। अनुजानीयुरन्येषां सांघिके वस्तुनि संघाय पुद्गलाय वा भिक्षवे वासवस्तुकरणम् [15]। संघे(?)द् दानपतिरनुज्ञातेन [16]। कल्पन्ते प्रतिक्रमणकबहिरन्तर्वा नगरस्य [17]। व्यवच्यर्थं(र्थे) भित्तिकरयेन स्वरूपे संरागप्रत्ययं विहन्युः [18]। अंजलिपूरणिकया पायनेन मातृग्राममनु-गृह्णीत नाच्छिन्नधारदानेन [19]। अर्हस्तु कालत्वेऽन्तर्वर्षमागतो लाभे [20]। बहुतरत्वं वर्षाकालस्य तल्लाभकालः [21]। न कर्मण्यलाभो भोक्ता [22]। देयत्व-मप्राप्तयल्लाभे भक्तस्य [23]। नान्ये लाभे सन्निपत् (?) [24]। निर्दोषमतदर्थं गतस्य वेलाप्राप्तौ विहारान्तरे भोजनम् [25]। दुर्भ(?र्भि)क्षे चानन्तस्य स्वे [26]। अतिरि-क्ततायां भिक्षु[ः] मात्रर्थाद् ग्रहणञ्च विहारमन्युपेरन् (?) [27]। दानपतेः प्रति-

संस्करणायोत्सारणम् । असंपत्तौ सांघिकस्य यावच्छक्तिविनियोगः । स्वयञ्च प्रतिसंस्करणम् । लाभग्राहिणो विहारस्य सम्मार्जनम् । न प्रसादलाभस्य वैहारत्वम् । बद्ध्वा द्वारं विहारात् प्रवरे(?से)युः । पालञ्च स्थापयित्वा । पिण्डकस्यासत्त्वोऽस्मै दाना(? न)म् । नानिर्याय चौरतत्त्वाभावं सद्वारमनुप्रयच्छेत् । दर्शनमतिरुक्षशरणपृष्ठं मा त्वं ज्वरित इति संज्ञया ख्यापनमित्यत्रोपायः । निवासानामपितृमात्रादेः प्रत्यभिज्ञाने । नाप्रत्यभिज्ञाताय सभयतायाया(यां) द्वारं दद्युः । धारयेदारण्यकण्कुक्करम् । उत्थायैवासौ काल्यमवलोकयेद् विहारं चैत्याङ्गनं च । उच्चारश्चेत् तत्कृतः छोरयेत् प्रस्रावश्चेदुद्वयेन्नखरिकाभिलिखितं चेत् समं कुर्यात् । मण्डलकमेषां स्थानेषु । पात्रशेषस्यास्मै दाने(?नम्) । बहिश्चैत्यविहारोपविचारतः । यथेष्टमीर्यापथा उद्देशदाने ।

( ३ ) सामीच्यादि ।

धातुसाम्यं पृष्ट्वा सामीचीकरणपूर्वकं नवकस्य ग्रहणायेर्य[ा]पथभजणं (?नं) । वद्धकृतोः । अनवनतकायचित्तस्य । रि(?क्र)जोः । चंक्रम्यमाणे पदपरिहाणिका चंक्रम्यस्य । स्थानस्य तिष्ठति । निषण्णे निपन्ने च निपादस्य । नीचतरासने । उक्ते नवकस्य । उक्ते ड्ड (?) क्रियानुक्ते । बहुत्वे प्राज्ञस्यावलोकनम् । भुक्त्वो(?क्त्वा)भ्रमणोपविचारं स्वाध्यायनम् । दर्शनोपविचारे स्थित्वा । अववादमेकान्ते प्रक्रम्य संवादयेत् । सुस्वाध्यायितं सुपरिमृष्टं निःसंदिग्धं कृत्वोद्देश(?)धारणं च ।

( ४ ) भक्तोद्देशकादिसम्मतिः ।

संमन्येरन् विहारभक्तौ(?क्तो)द्देशकयवागूखाद्यकफलभाजकम् । अवरमात्रकस्य । शिष्टमन्येष(?)श्चर्यं तदारूपम् । भाण्डगोपकम् । वर्षाशाट्याः कठिनस्य चीवराणां भाजकञ्च । उपधिवारिकप्रेषकौ । भाजनवारिकम् । वारणेऽस्यैषां व्यापारो भुक्ते च गोपने । पानीयवारिकम् । प्रासादकवारिकम् । अवलोक्य तेनाच्छटाशब्दकरणपूर्वकमुं संस्था(?)भजमानानां प्रव्रजितानाम् । संस्थायां विनियोजनम् । तद्यथा अन्यशब्दतया भोजने सुसंवृततया सुप्रतिच्छन्नतया चैत्यवन्दने यथावृद्धिकथा च । परिषण्डाधा(?वा)रिकम् । तत्प्रथ[म]तो भुक्त्वा वंस(?श)मादाय काकचटकपार[ा]वतादीनां भुञ्जनेषु तेन वारणम् । शयनासनवारिकम् । मुण्डशयनासनवारिकम् । लोकप्रवेशसकल्पिकतयोः भोजने । छण्डिक (?) वारिकम् ।

॥ [ इति ] शयनासनवस्तु ॥ २ ॥

## (२) पश्चिमशयनासनवस्तु ।

### (१) वन्दनम् ।

सप्रणामां वच[न]मन्धकारवन्दनस्थाने निश्चारयेत् [1] । लोपचारप्राप्तप्रसृतोऽन्यस्य वन्दनेन वन्देत [2] । कृतनमस्य आह्वया सामीच्यम् [3] । न सान्तरस्य सामीचिं कुर्यात् [4] । न वन्दमानं नारोग्ययेत् [5] । नावन्द्यत्वमतीताया[त्]तत्प्रत्ययाः [6] । न पलिगुधं वन्देत [7] । न पलिगुध(धं) चरेत् [8] । नैनां स्वीकुर्वीत [9] । न पलिगुधम्(?) [10] । द्वयं पलिगोधो भक्ष्यमाणेन वा दन्तकाष्ठादशुचिना वा तद्भूमिपरिकर्मणात् [11] । पलिगोधतद(?)त्र नाम्यमेकचीवरता चदे(?वेद)न्दने पञ्चमण्डलकेन जंघप्रपीडनक्रिया च [12] । न क्षद्वन्तं जीवेद्य(?) भिवन्देदु(? तो)त्सृज्यान्त्यावयसमागारिकां च [13] । नवकर्मेनमारोग्ययेत् [14] । वन्देद्(? त) वृद्धम् [15] ।

### (२) नामगोत्राग्रहणम् ।

क्षुत्वा च [16] । नायुष्मन् नामगोत्रवादेन तथागतं समुदाचरेत् [17] । नास्य निरु(?रु)पपदं नाम गोत्रं वा गृह्णीयात् [18] । न वृद्धस्य [19] । प्रतिरूपमत्र स्थविरायुष्मतोरुपपदत्वम् [20] । न पूर्वत्र [21] ।

### (३) नवकर्म ।

गमनागमनसपक्षवस्तुनि नवकर्मिको विहारं प्रति स्थापयेत् [1] । वृक्षवापीचंक्रमैः [2] । उपविचारेण [3] । अव्याकीर्णविलापशब्दनिर्घोषे [4] । कारणमनुज्ञाते दानाविहारकरणार्थाद्(?) वस्तुनस्तत्करणभाण्डस्य [5] । लयनस्यास्य स्थापनाय दानम् [6] । क्रयस्तदुपयोज्यस्य तैलादेः मात्रया [7] । भोजनं ननकर्म(? र्मि)केण तादृशस्य यादृश्य पवने [8] । निर्विहारस्य तस्य स्थानस्य [9] । प्रग्रहणं स्नेहलाभस्य [10] । सामन्तकविहारे पञ्चपुरत्वं विहारेषु पर्यन्तः [11] । त्रिपुरत्वं भिक्षुणीनाम् [12] । अतिरेचन गन्धकुटिवातायपोतिकयोः पुरद्वयेन [13] । निरवद्यमेषा पुरोजित्वे भरस्य पुरोद्वेष्टनम् [14] । आरब्धस्य च वृहत्तो(? तो)ऽल्पस्य वा करणार्थं भञ्जनम् [15] । वृहत्त्वार्थं स्तूपप्रतिमयोः [16] । सी(? शी)र्णतानिमित्तं तुल्ययोरपि निष्ठितयोश्च [17] । प्रदेशस्य च प्रतिसंस्करणार्थम् [18] । अवतारणं च वस्त्रादीनाम् [19] । अन्यारोपना(?ण)यापि [20] । नैतदर्थमनुज्ञापिता नयेत् [21] । जातकादिचित्रबुद्धवचनलेख्ययोश्च [22] । भंग्यस्यैव विशेषस्य क्रियायै [23] । करणमकृतावारम्यान्येन शेषस्य [24] । देयत्वमर्धोत्थितं सघार्धश्चेदुत्थानकस्य [25] । पश्चाद्भक्तं तद्दाने कालो हेमन्तश्चेद् ग्रीष्मश्चेति पूर्वंभक्तम् [26] । भक्तकरणीयकालस्य शेषणम् [27] ।

## (४) यात्राप्रवर्तनम् ।

नासन्नीभूय ततो यात्रायां प्रवर्त्तेत [९] । प्रक्षालितं(? त)हस्तपात्त्वं तदन्तः [१०] । पुरोभक्तिकमुत्थानकारकः समादापयेत् [११] । पश्च[ा]द्भक्ते पानकहस्तपादाभ्यंगम् [१२] ।

## (५) द्वारादिकरणम् ।

नयनानां द्वारकरणम् [१३] । कवाटदानम् [१४] । आयामकटकचर्मखण्डिकयोः [१५] । वातायनकरणम् [१६] । मध्येबहिःसंभूतस्याभ्यन्तरे विशालस्य समुद्राकृतेः [१७] । जालिकादानम् [१८] । कवाटिकायाश्चक्रिकाघटिकाशू(? सू)चीनाम् [१९] । अजपादकदण्डधारणम् [२०] । अरामथेन(?) वाननम् [२१] । करणं प्रासादस्य क्य(?)यनाग्रतः [२२] । सप्ताष्टेष्टकास्तरदानम् [२३] । तदुपरिन्यासपट्टस्य [२४] । तस्य स्तंभपंक्तेः [२५] । तेषां त्रिकटपत्राणाम् [२६] । तेषां सिक्तानाम् [२७] । तासां धरणीनाम् [२८] । तासां पट्टानाम् [२९] । तेषामिष्टकास्तरस्य [३०] । तस्य क्षोदकस्य [३१] । अप्रपातार्थं वेदिक[ा]करणम् [३२] । अकम्पनायामस्यामयसंगदानम् [३३] । लोहकीलकैरस्य संपर्वणम् [३४] । सोपानस्यातिरोहार्थं करणम् [३५] । अधःशैलमयस्य [३६] । मृन्म(? ण्म)यस्य [३७] । मध्ये [३८] । उपरि दारुमयस्य [३९] । अधिरोहेन्निःश्रयण्या [४०] । दारुवंस(? श)रज्जुमय्यामपि [४१] । इष्टकास्तरणपुष्करिणिकायां द्वारकोष्ठके चाकर्दमीभावाय दानम् [४२] । तदुपरि क्षोदकस्य [४३] । सुधायास्तस्य [४४] । अभावे काष्ठपट्टस्य यदत्राणार्थम् [४५] । अन्तरेऽन्तरे वेष्टकायाः [४६] । चैत्येऽप्येतत् [४७] । कृतत्वमस्याव्याममात्रे कृततायाम् [४८] ।

## (६) सिंहासनादिकरणम् ।

सिंहा[स]नस्य करणश्चतुरस्रकस्य [४९] । सिंहमुखत्वं पादकेषु [५०] । ग्रहणाय संचारणे लोहकण्टकानां चतुष्केऽप्येषु दानम् [५१] । पट्टिकाभिः दानम् [५२] । मस्तकर(रक ?)स्यादानम् [५३] । उपरि वितानस्य [५४] । लम्बनानां सोपानकस्य करणमिष्टकामयस्य शिरे [५५] । संचार्यं काष्ठमयस्य [५६] । असंपत्तौ निःश्रयणिकायाः [५७] । पादपीठस्य करणम् [५८] । पत्रवैभङ्गुकानामुपरि दानम् [५९] । कक्षपिण्डकस्य वा [६०] । पादयोरालम्बनमत्रार्थः [६१] । संपत्तिरस्य शिस्पा(?)काकचटकयोः [६२] ।

## (७) जालादिदानम् ।

पारावतेभ्यो शुक्लानानामि(म ?) विहेठाय जालदानम् [६३] । चातुर्विध्यमस्य [६४] । मौञ्ज(ञ्जो) वानलजः साणकः कार्पासिक इति [६५] । चक्रिकाणां चतुःषु कोने(?णे)षु दानम् [६६] । तासु बन्धः [६७] । स्फुटनं छेदश्च काष्ठस्य तस्मादयोम-

यीनाम् [८८] । छिद्रस्यास्यैकदेशे करणम् [८९] । शुक्ते प्रवेशाय [९०] । वेलायामस्य पिधानम् [९१] । पानीयेन प्रासादस्याप्लवनाय वर्षासु पट्टानां दानं स्तम्भान्तरेषु [९२] । आलोकाय प्रदेशमुत्सृज्य [९३] । अभावे कि(?की)टकानां किलिञ्जानां वा [९४] । वार्षिकमासचतुष्टयान्तेऽपनयनम् [९५] ।

## (८) मण्डलवाटादिकरणम् ।

करणं मण्डलवाटस्य [९६] । सीतलस्थानतायै बहिः भित्तिदानम् [९७] । स्तम्भपंक्तेः [९८] । वात[ा]यनमुक्तिः [९९] । आसनोच्चमसमानकक्ष्यापरिमाना-(?णा)न्तानाम् [१००] । जालिकाकवाटिकयोः दानम् [१] । करणं भक्ताभ्युपस्थापनचंक्रमणशालानाम् [२] । अवच्छादनकानाञ्च कण्ठादेशपरिक्षिप्तानाम् [३] ।

## (९) भूमिगृहककरणम् ।

कल्पते भूमिगृहकम् [४] । प्रासादवदत्र वेदिकागतम् [५] । वेष्टिकत्वञ्च कन्थायां प्रव्रजितारामस्य [६] । मुक्तोदकभ्रमत्वञ्च भित्तेः [७] । वाटपरिखाभ्यां च [८] । पुद्गलस्य च विहारः सपरिकरः [९] । करणं नीलादिकृत्स्ननिमित्तासुखीभावाय नीलादिचतुर्विधस्य लयनभित्तीनाम् [११०] ।

## (१०) चित्रणमारामस्य ।

कल्पते चित्रितत्वं प्रव्रजितारामस्य [११] । द्वारे यक्षाणां चित्रणं वज्रधरादिहस्तानाम् [१२] । द्वारकोष्ठके संसारचक्रस्य [१३] । गण्डपञ्चकस्य करणम् [१४] । ऊर्धे(? र्ध्वे) देवमनुष्याणाम् [१५] । चतुर्णां द्वीपानाम् [१६] । औपपादुकानां सत्त्वानां घटि(? टी)यंत्रवच्च्यवमानानामुपपद्यमानानां च रागद्वेषमोहानां पारावतभुजंगसू(? शू)कराकारेण [१७] । ग्रस्यमानयोर्मोहेन पूर्वयोः [१८] । प्रतीत(?त्य)समुत्पादस्य सामन्तके द्वादशाङ्गस्य [१९] । सर्वस्यानित्यतया ग्रस्तस्य [१२०] । ऊर्ध्वं बुद्धस्य शुक्लं निर्वाणमण्डलमुपदर्शयेत् [२१] । गाथयोरारब्धमिति द्वयोरधस्तात् [२२] । आख्यातुरस्य स्थापनम् [२३] । सामन्तकेनास्य महाप्रातिहार्यमारभङ्गयोः [२४] । प्रासादे जातकानाम् [२५] । मालाधराणां यक्षाणां गन्धकुटिद्वारे [२६] । उपस्थानशालायां स्थविरपंक्तेः [२७] । गन्ज(?)द्वारे[ऽ]ङ्कुरहस्तानां यक्षाणाम् [२८] । खाद्यहस्तानां भोजनमण्डपे [२९] । जेन्ताका(?क)शालायामङ्कुरक(?कु)शहस्तानां कु[म्]भाण्डानां चाग्निद्दी(? ग्नि दी)पयताम् [१३०] । अग्निशालायां मेचकादि कुर्वतामग्निं च ज्वालयतां कुम्भाण्डपुत्राणाम् [३१] । दानपतेर्दीपं धारयतो देवदूति (?) यस्य च [३२] । नानालंकारविभूषितानां कलशहस्तानां नागकन्यकानां चोदकं धारयन्तीनां पानीयमण्डपे [३३] । ग्लानकल्पिकशालायां तथागतस्य ग्लानमुपतिष्ठतः [३४] । वर्चःप्रस्रावकुट्योः शिवपथिकायाः शिरस्करोटेर्वा [३५] ।

### (११) विहारसम्मार्जनादि।

न विहारे न[ा]भ्यवकाशे सधूममग्निं कुर्याद् धारयेद् धारकुट्टिमे सर्वम्[६६]। धारयेत् तदर्थं अष्टिकाम्[६७]। समावर्तनार्थंश्चायोमयं दण्डतपकम्[६८]। डिंसुकेनापि (?) दारुमयेनैतत्कार्यसम्पत्तिः[६९]। विहारमुपधिवारिकः संमृज्यात् प्रत्यहम्[७०]। असक्तावुपयुज्यमानं प्रदेशम्[७१]। अवशिष्टमष्टम्यां चतुर्दश्यां च सर्वसंघे गण्डीमाकोट्य धर्म्यया वा कथयार्येण वा तुष्णीम्भावेन[७२]। धर्मोत्सवे सेकः सुकुमार्याश्च गोमयकार्पीप्रदानम्[७३]। स्नानमन्तरे (?)[७४]। हस्तपादप्रक्षालनं वा[७५]। गात्रस्योदकदिग्धेनानुपरिमार्जनम्[७६]। स्नेहलाभस्य करणम्[७७]। रत्नार्थं संमृष्टामृष्टयोर्गन्धकू(?कु)टिप्रतिमाचैत्ययष्टिच्छयानां चार्यां गाथां पठित्वा लंघणं(? नं)[७८]। शयनासनस्थानयोरेवाह्वोः प्रत्यवेक्षणं संस्करणं निःसृतैः[७९]। सेकसंमार्गसुकुमारिगोमयकार्पीप्रदानानि वासवस्तूनि कुर्वीत[८०]। शयनासनं मलिनं प्रस्फोटयेत्[८१]। अतीव चेद् धावेत्[८२]। ऊर्धं(?ध्वं) सेकात्संसृष्टिः[८३]। ततश्च प्रज्ञपनम्[८४]। न प्रस्फोटिते सरजस्कतायामाधारे[८५]। प्रज्ञपनीयेभ्यो वस्त्रस्यैकस्य प्रस्फोटने विनियोगः[८६]। स्थूहस्य[८७]। प्रतिसंस्करणमस्य[८८]। अशक्यतायां चीरीकृत्य पट्यामुपनिबध्य प्रस्फोटनम्[८९]। तथाप्ययोग्यत्वे गोमयमृदास्तम्भसुशि(?षि)रे कुण्य(?)स्य वा लेपनम्[९०]। पुण्याभिवृद्धिचिरतायै दात्रः (तुः?)[९१]। न द्वारकोष्ठके प्रासादे वा शय्याप्रज्ञप्तिं कृत्वा वा धारणं कुर्यात्[९२]। कुर्यादशद्व (?) प्रतिपक्षेणार्धमष्टमीचतुर्दशी(?श्योः) प्रासादे[९३]।

### (१२) मंचपीठादिधारणम्।

धारयेत् मंचपीठम्[९४]। कुट्टिमाविनाशार्थं मण्डलमधःपादकच्छेदं कारयेनु(?)पमुटके चैनं स्थापयेत्तुकेन वा वेष्टयेत्[९५]। नासंघो लेख्यपादकपीठकास्वीकृतं भजेत[९६]। न भद्रासनमाधाङ्कासनयोः[९७]। न दीपवृक्षस्य[९८]। अनेकलतकस्येत्यन्यपरम्[९९]। धारयेच्चतुरस्रकं वृषीम्बोपधानकं च[१००]। चतुर्द्विगुणद्विगुणीकृत्य सेवनम्[१०१]। तूलेन पूरणम्[१०२]। नाकृतं प्रत्यवेक्षणे शय्यां कल्पयेत्[१०३]। नानुपस्थाप्य स्मृतिम्[१०४]।

### (१३) सहानिषीदनम्।

नापरेण सार्द्धमेकत्र मंचे संस्तरेऽन्यत्र वा[१०५]। कल्पयेदसंभवे लज्जी पृथक् प्रत्यास्तीर्योन्तरे कृपिकापात्रस्थाविकादि दत्त्वा स्मृतिमुपस्थाप्य[१०६]। न त्रयादूर्ध्वे(?र्ध्वं) प्रचितिः सार्धेन मंचरूढतां भजेत[१०७]। न द्वया (?) दीर्घपीठि[१०८]। नासंस्यामनेकः[१०९]। न त्रिवर्षाः परेणान्तरितेन सार्धमासनस्य[११०]। मञ्चे-

दान्तर्गृहे उपाध्यायेनाप्यासनाभावे स्मृतिमुपस्थाप्य (८१)। न क्वचिद् गृहिणानुपसंपन्नेन वा (८२)। न पण्डपण्डकमातृघातकादित्तीर्थ्यतीर्थ्याक्रान्तकस्तेयसंवासिकनानासंवासिकासंवासिकैः (८३)। न शिक्षादत्तकः (८४)।

( १४ ) सांघिकपरिष्कारेषु वर्तनम् ।

शिक्षादत्तकेनासनत्वं चिलिनिमि(मिनि ?)कायाः सोपसंपत्संघसन्निपातादन्यत्र (८५)। न स्थलिकायाः संकटसंबाधप्राप्तावनापत्तिः (८६)। संचारणे शयनासनस्य द्वौ चेदेकेन मंचपीठस्य वा ग्रहणमपरेण बृस्या(?व्या)देः (८७)। नैतत्सांघिकमदयमाकर्षन्निष्कर्षेद्धीन (?) तथा कुर्याद् यथास्य धून(? त)मलरजोभियोगः संपद्येव(? त) (८८)। नास्याशुचिकुट्योः सान्निहित्यम्भजेत (८९)। न विनस्य (?) छोरयेत् (९०)। आतपनं स्ये(?) शोषणं प्रस्फोटनं छिद्रेगंडकदानम् (९१)। दण्डकस्य स्फोटो (?) (९२)। क्षीणमध्यस्यान्तयोर्मध्यताकरणम् (९३)। रंजनं तदर्हस्य (९४)। अशक्यप्रतिसंस्करणतायां दीपेषु विनियोगो वर्तिकात्वेन रत्नोपयोगेषु पुद्गलदात्रुकेष्वपि (९५)। अनुपय(?यु)ज्यमानस्यात्र कर्दमेन भित्तिस्तम्भकवाटसुषिरेषु रत्नेषु लेपनमित्यनुप्रतिपत्तिः (९६)। अदेष्टस्ये(?)गृहीत्रा (९७)। शिष्टस्य संघेन संनिपत्य गण्ड्याकोट्टनेन (९८)। न शक्यं सांघिकमपहरन्तं दृष्ट्र(?) न निवारयेत् (९९)। नो त्रासे सांघिकमभ्युपेक्षेरन् (१००)। असंभ्रान्तस्य स्थानम् (१)। नेतरूपत्रै(?)योज्यत्वम् (२)। परिभुक्तिरसंभवे स्वस्थानोपनयनस्य स्थानान्तरे परिभोगेन (३)। न स्थानान्तरीयं भक्तोपकरणलाभं स्थानान्तरे परिभुञ्जीत (४)। तेनम(?)न्यस्मै दद्युः (५)। दासत्वं ग्रहीतुः (६)। दातुरभ्रगमे (७)। निरवद्यौसिभिः सांघिकस्य स्वस्यैव निरुपयोज्यस्य तृणकाष्ठस्योपयोगः (८)। यथागतिकानुद्दिष्ट अभूर्त्योपयोज्येन यथावृद्धिका (९)। साह्ये याचनसंपाम् (११०)। नातो विप्रयुक्तं वियोजयेत् (१११)। शुद्धत्वमुदकेन पादस्यैतत् तद्भावने (११२)। प्रविष्टत्वं कुटौ तत् (११३)। न निषद्यायोनिषद्यापण्णा(?)मुपस्थापयेत् (११४)। नास्यां यथाशृद्धिका (११५)। न कर्दमामिषपरिशुद्धं भिक्षुम् (११६)। नागक्ष्या निषीदेत् (११७)। न सत्यर्थिनि कृतकृत्य आवृद्धि भोज्यं धारयेत् (११८)। अकृतकृत्यत्वमन्तरालार्थतन्त्रतायां मुक्तावासनस्य (११९)। चीवरेणैनदायपट्टेन वा तदधिष्ठितं कुर्वीत (१२०)। नार्थिसद्भावे सत्यां गतौ सांघिकस्य पलिगुद्धतां भजेत (१२१)। निरवद्यमेवंविधाद् वियोजनं सत्यर्थे (१२२)।

( १५ ) नापितभाण्डादिधारणम् ।

धारयेत् संघो निषदां पुत्रकं (?) चा(वा ?)स्याः (१२३)। नापितभाण्डञ्च सु(?)त्यां प्रक्षिप्य भित्तौ(?चौ) स्थापनम् (१२४)। वासी च सपरशुनखादनादि तद् भाण्डम् (१२५)। दानमनेनाप्तन्म(?ण्म)यस्य भिक्षोः याचितकत्वेन (१२६)। न

भिक्षुणीकाच्यभाण्डं धारयेत् । धारयेत् सर्वं तैलभाजनम् । कौर्ड(?ड)घात् प्रभृत् (?)त्यर्धकौडघात् । स्थालीमामसीञ्च । अस्याः पर्यङ्ककिकाम् । मृन्म(?ण्म)यञ्चेद् धानम् । लब्धसंवृतिः दण्डां (?) । सिक्यं चैकव-र्णम् । दद्युरेने (?) । जीर्णग्लानयोः । संमन्नत्यनयोरेकेन वचसा दानम् (?) । धारणं सशब्दस्य श(?स)रीसृपादिप्रतिक्रियार्थं दण्डस्य । बन्धनं पटे[ऽ]मूलास्फोटे कृटेन । प्रान्तादट्टनेन । धारयेच्छत्रं ना रूढं वर्णमयम्या । पञ्जरप्रमाण(णं) दण्डम् ।

(१६) ग्रामादिचर्या ।

नानेक (?) ग्राममध्ये गच्छेत् । मार्गवशत[ः] चेत् पार्श्वायनतेन । प्रचरेत् प(पि)ण्डाय पर्यन्तायां देवस्य । नाकालिपकत्वम् । दण्डे निलीनस्य । स्थिते गृहेषु स्थापनम् । निर्गच्छता ग्रहणम् । न घोषवेश-पानागारराजकुलचण्डला(?ण्डाल)कठिनस्थतां भजेत । नाशुचिकुटिसमीपेऽव-स्थानम् ।

(१७) आरण्यककरणीयम् ।

न रत्नभूतेन चस्त्रेना(?णा)रण्ये निवसेत् । न मेरुकाचचूर्णेन प्रणाकासं(?) जातः । हिंगोः । निम्बावासकप्रन्ना(?)णाम्बा । तत्पुटस्य तन्नोप-करणतद(?)त्यम् । शोपणमस्से(?स्य) तदर्थम् । दिग्मार्गतिथिदिवसन-क्षत्रेष्व[ा]रण्यक[ः] कुशलः स्यात् । नित्य[म्] सन्निहिताग्निपानीयः । सक्तुत् (?क्तून्) संनिदध्यात्नतुकानि मधुसर्पिंषि (?र्पिंपि) यथाशक्ति । शेषं भोजना (?) ज्ञायते चेत् ।

(१८) भिक्षुण्यकरणीयम् ।

न भिक्षुण्यरण्ये वसेत् । करणं वर्षकस्य नगराभ्यंतरे । नासैपाप (?) द्वारे तिष्ठेत् । नावलोकनके । न चतुष्पथे । नाप्राप्तवती । प्रावरणत्वमत्र संकक्षिकायाः । नापिधायिनो धारयेद् (?· गृहिसंनिधाने । अर्धपर्यङ्कोऽस्याः पर्यङ्कस्थाने । दद्दीव प्रस्तावकरणद्वारे प्राणकाप्रवेशाय वस्त्रप्रभृति । न प्रवेशावरणं विहारे भिक्षुणीनाम् । भिक्षवः कुर्युः । अनालापाने अववादपोषधप्रवारणास्थापनैरेनाः परिदमयेयुः । नाननु-ज्ञाते(?सै)पा भिक्षुं विहारं प्रविशेत् । सत्यसिनसा(?)न्तरेऽभ्यनुज्ञानम् । प्रश्ने (?) निर्जयोऽप्रदुष्टताम् ।

(१९) सूच्यादिसमायोजनम् ।

शू(? सू)चीपटिकाचाक्रिकवाटकाकुञ्चिकानां बन्धनाय विहारे समायो-जनम् ।

(२०) उपधिवारककरणीयम् ।

प्रदोपवघ्वा (?) प्रत्यवेक्षणमुपधिवारिकेन विहारस्य । जागरणं सभयतायां प्रा(?प्र)हरिकत्वेन । तव्यू(?व्यू)तेन वर्जनं खभसमापत्त्योः । कृततामत्र संविधानस्य उपधिवारिकं संघस्थविरः पृच्छेत् । विहारमोपे न चेद् वद्धत्वं समायुक्तैरुपधिवारिकस्य दास्य (?) । हापने यावतामेतत्तावतामंशानाम् । धारयेत् कुञ्चिकां ताडकं च । नाबद्धा यावद् भावं धन्धनैः द्वारं प्रक्रामेत । शून्यावासं चेत् प्रविशे[त्] सेकाद्यनुकुर्यात् । भाण्डं विप्रकृतं प्रतिशमयेत् निर्मृज्य(ज्ये?) दक्षमं चेत् । सं(?)श्चेत् फलपकारोऽल्पहरिततां कारयेत् । गृहिणश्चेदत्रागच्छेयुर्धर्म्यमेम्यःकथामन्यश्च शक्यधर्मः कुर्यात् ।

(२१) वृक्षरोपणम् ।

नाकल्पिकं वृक्षरोपणम् । नैनमुप्त्वा न पालयेत् । आयुष्मणा(?)न्तर्वृक्षम् । अन्यमाफलनात् । चिरत्वे पंचकं वर्षाणाम् । स्वत्वभिक्षुक्तस्यात्र भिक्षोः । हस्तयोः श(?शो)चनम् । पादयोः दन्तकाष्ठविसर्जनम् । पात्रनिर्मादनं स्नापनमिति यापनम् ।

(२२) गर्भगृहकरणम् ।

गर्भगृहस्य शीतवारणार्थं करणम् । गवाक्षानां(?णा)मस्योच्छ्वासाय मोक्षः । अवच्छादनदानम् । गृ(?ग्री)ष्मेऽस्याच्छेदार्थमपनयः पूर्वस्यापि वर्षास्वक्लेदान्तम् । निर्वाहस्य चाम्भस(? सः)करणम् । न मूलशूचिमभ्युपेक्षेरन् । वर्षाद्विभागेन विभज्य परिकर्मणाम् । क्वचिद्दन्तकाष्ठभक्ष्य(?क्ष)णं क्वचिन्मुखशोचनं क्वचित् पादयोरित्येवं न तत्प्रसृततया ।

(२३) पुष्पफलादिरक्षा ।

पुष्पफलरक्षणाय भिक्षूणामुद्देशः । भक्तकालाध्वमपरेषाम् । प्रथमतरं भुक्त्वा नैर्गमनम् ।

(२४) पठनम् ।

पृथक् प्रवृत्त्यापि पाठको बहुतरोपस्थापनकारिणामशक्त(?) सानुकम्पेत् (?) । अनुकम्पेतोद्वहस्य तद्विनयं तदुद्देशस्वाध्यायनिकपरिपृच्छानिकदानैः भिक्षुणीः ।

(२५) लेखनम् ।

लिखेल्लेखम् । असमर्थश्च स्मर्तुं धारणाय विनयम् । अलेख्यत्वमस्य । तद्वदत्र प्रातिमोक्षः । तत्प्रतिसंयुक्तम् । पैङ्गलिकस्य च ।

( २६ ) परिष्कारेषु निमित्तकरणम् ।

अदोषं निमित्तकरणम् । सांघिके नाम्नः शयनासने लेखनम् । देयधर्मोयममुकस्येदंनास्मि विहार इति । चक्षेषु च । अन्यत्र चैवंविधे ।

( २७ ) बुद्धवचनस्य छन्दस्यनारोपणम् ।

न बुद्धवचनं छन्दसि पदे क्रमे वा तत्परायणतयाऽऽरोप्य पठित उद्गृही(क्षी)तद्दृहिः (?) शास्त्राणि समर्थः परसंज्ञपने अनुत्सृजन् बुद्धवचनाभियोगम् । तृतीयो दिवसभागस्तत्कालो [?ऽ] प्रणा(?मा)तः । रात्रेश्च । उद्गृहीतानुग्रहिणो मन्त्रान् । प्रयुञ्जीत । नोपघातिनः ।

( २८ ) रत्नत्रयभिन्ना नमस्यता ।

रत्नत्रयस्यैषु नमस्यस्थाने व्याहारः । नान्यदेवतां नमस्येत् । न पूजयेत् । नासत्कुर्यात् । आर्षी(र्षा) गाथां भाषणेनैनामभिमुखं स्थित्वा संबोध्य(?)छटाशब्देनायनप्राप्तो न गृह्णीना (? त) ।

( २९ ) शिल्पानुग्रहणम् ।

न शिल्पमनुतिष्ठेत् ।

( ३० ) उपस्थानादिकरणीयता ।

शिक्षेयुरुपस्थापयेद् (?) वा । तद्भाण्ड[म्] समुत्सृज्य शस्त्रकोशं सूचीगृहकं मेलंदुकं च । उपतिष्ठेत् कुशलश्चिकित्सया (?) तीर्थ्यं पुण्य[ा]भिप्रायेना(?णा)नमृतिकया । न विवेकं दत्वान्यत्र गच्छेत् । गच्छेत् तद्रूपेषु प्रत्ययेषु प्रतिविहारेऽस्याप्युपद्रवे व्यपदिश्य । कुर्याच्चापितकरणीयं सब्रह्मचारिणस्तुल्यव्यञ्जनस्य प्रतिगुप्तप्रदेशे । घटनं च भग्नं मध्याङ्गस्य । ग्रन्थ(?थ)नञ्च रत्नार्थं मालागुणानाम् । लेखनश्च रत्नपूज[ा]भूतस्यासत्यकृतेरालेख्यस्य । तच्चं तदर्थलेखायाः ।

( ३१ ) मृतकक्रिया ।

मृतस्य सब्रह्मचारिणः शरीरपूजाकरणम् । दहनमस्य न चेत् सप्राणकव्रणत्वम् । प्रत्यवेक्षणेन निश्चयः । निरान[न]भाष्प्रावनम्या नद्याम् । अयुक्तो दवमध्ये स्थापनम् । निषद्ययोदक्शिरसो (?) दक्षिणपार्श्वेन । कक्षापिण्डकस्य शिरसि दानम् । तृणैः पत्रैः वा प्रतिच्छादनम् । धर्मश्रवणदक्षिणादेशनयोः करणम् । स्पृष्टवद्भिः सचेलस्नानस्य । अन्यैर्हस्तपादप्रक्षालनम् । चैत्यमभिवन्द्य प्रवेशः ।

( ३२ ) स्तूपनिर्माणम् ।

द्वैविध्यं स्तूपे । सहगतत्वं स्तम्भभूतता च । अर्हत्समस्य प्रव्रजि-

तानां कल्याणश्चेत्[६०] । सर्वाकारस्य बुद्धानाम्[६१] । जगतीचतुष्कं जङ्घ[ा]ण्डकहर्मिकायष्टयस्त्रयोदश छत्राणि वर्षस्थालकनित्याकाराः[६२] । विवर्षस्थालकस्य प्रत्येकबुद्धानाम्[६३] । फलपरिमाणैः छत्रैरेकाधिकैरस्य श्र[ा]वकानाम्[६४] । तथागतपार्श्वदेशवैवृत्तता चेत् तस्यां दिशि करणं यत्रैषां तत्परिवारदाने च स्थानमभूत्[६५] । नान्यस्मिन्न यथावृद्धिका[६६] । मुण्डकस्य पृथग्ज[ा]जनानाम्[६७] । बहिरेषां संघारामात् कर्तव्यत्वम्[६८] । अर्हत्यार्पस्तूपमहम्[६९] । सब्रह्मचारिणां श्र[ा]वस्तूपे निर्यातितस्योसि(? शि)त्वम्[७०] । घर्म्ये बुद्धस्य लोहमयं स्तूपकरणम्[७१] । सुवर्णरूप्यवैदूर्यस्फटिकमयानां केशनखस्तूपानां च[७२] । अनुपरिवारस्यात्र करणम्[७३] । तुषितभवनवासादिपरिनिर्वाणान्तं वृत्तं तदाख्यम्[७४] । सुधादानम्[७५] । श्वेतनम्[७६] । दीपप्रतिग्रहणम्[७७] । वेदिकया वेष्टण(?नम्)[७८] । तोरणस्योत्स्त्रयणम्[७९] । ध्वजानां दानम्[८०] । चातुर्विध्यमस्य[८१] । सिंहध्वजो मकरध्वजो नागराजध्वजो वृषभध्वज इति[८२] । गहनेऽपि करणम्[८३] । तोरणस्योत्स्त्रयणम्[८४] । चैरकस्य करणम्वेदिकयास्य परिक्षेपः[८५] । स्तम्भानां गे(?गै)रिकेन(?ण) लेपनम्[८६] । भित्तिः(? त्तेः) लाक्षया चित्रणं गन्धाभिषेकदानम्[८७] । तैलालचन्दनकुंकुमशे(?)कानाश्च[८८] । न कण्टकानां रोपणं नागदन्तकानां माससंयोजनाय दानमुत्तिष्ठति[८९] । न छिद्रणां (?)[९०] । नोपरिदीपदानं आगारिकैःपूजनार्थमधिरोहणमभावे श्रमणोद्देशैःपादो(? दौ) प्रक्षाल्य गन्धोदकेन[९१] । न वेदनेन गन्धैरुद्वर्त्य वस्त्रेण वा वेष्टयित्वा शास्तु[ः] संज्ञामामुखीकृत्यार्थमभिधाय स्मृतैः[९२] । तेषामपि भिक्षुभिरेवमेव[९३] । तदर्थं रज्ज्वासंजनम्[९४] । अवच्छेदनगर्भेण नासकं(?) प्रतिबन्धाय छादनम्[९५] । द्वाराणामनन्धकारायास्य मोचनम्[९६] ।

(३३) बुद्धप्रतिमाकरणम् ।

बुद्धप्रतिकृतै(?ते)स्करणम्[९७] ।

(३४) बुद्धप्रतिमामहः ।

महस्यासाप्रस्थापनम्[९८] । जातिजटाचूडाबोधिमहानाश्च[९९] । नगरप्रवेशे चास्याप्करणम्[१००] । कल्पतेऽत्र भिक्षोस्तद्वहनम्[१] । नवकेष्वस्य प्राप्तिः पंचभिः निकायैः परिवारदानम्[२] । आर्धेयस्य वृद्धेर्ग्रहणम्[३] । वादित्रैर्णतद्वाद्यमानेन च महता सत्कारेण निरा(?र)घ्यं वादनाय कुरु कुरु भोष् (?भोः) पुरुष ! शास्तुः पूजामित्युदीरणम्[४] । उद्घोषणं रथ्यावीथिचत्वा(?त्वर) सृ(?शृ)ङ्गाटकेषु श्वः परश्वो वा भविष्यत्तायां लिखितस्य इति बुद्धप्रवेशो भविष्यतीति भुजादावारोपितस्य हस्तिस्कन्धे छत्रध्वजपताकापरिवृतस्य[५] ।

## ( ३५ ) बोधिसत्त्वप्रतिमाकरणम् ।

धर्म्यं बोधिसत्त्वप्रतिमाकरणम् ।[६] ध्वजैरस्याः परिवारो वेदिकावेष्टनं लोहस्तम्भे ( ? म्भै ) श्च । [७] पताकानां तेषु बन्धः । [८] अनुमानकरणम् । [९] आभरणप्रतिमुक्तिरुत्सृज्य पादाभरणं कर्णपूरं च ।[१०] गन्धाङ्गदानम् । [११] शिबिक ( का )याम्बा हिण्डनम् । [१२] रथेन च । [१३] छत्रध्वजपताकानां तत्रोत्सपन ( ? ण ) म् । [१४] । पुष्पन्ततन्स ( ? पुष्पावतंस )कस्य शिरसि दाने । [१५] अर्वपाधयोश्च । [१६] अभिसारस्य निःश्रितैस्तरुणवृद्धैश्च नयनम् । [१७] चक्षण ( ? ) स्थविरैः । [१८] पालसमुद्गकस्य रथे करणं गन्धसमुद्गकेन सन्निधानम् ।[१९] मालामुक्तिः ।[२०] समाप्तायां पूजायां निवृत्तेषु वाद्येषु विप्रक्रान्ते जनकाये मण्डनापनमनम् ।[२१] नात्रौ ( ? न रात्रौ ) । [२२] धर्म्यं प्रव्रजितवासमर्हं ( ? ) प्रस्थापनं ।[२३] भक्तकल्पिकस्य कल्पिकस्य प्रतिबोद्धि ( ? मोद्ध ) स्य कल्पिकसमासः ।[२४] उत्तरस्य मवस्तु ( ? ) प्रतिपूर्वस्येति कल्पिकस्य । [२५]

॥ ( इति ) शयनासनवस्तु क्षुद्रकादिगतम् ॥

॥ समाप्तञ्च शयनासनवस्तु पश्चिमम् ॥ १७ ॥

---

विनयकर्मसंग्रहकारिकाः ।

धारणं विप्रवासं च स्पर्शमग्नेर्निवारिते ।
भोजनं बीजाघातं च देशे च हरिते शुचिः ॥
उत्सर्गं वृक्षारोहश्च शैक्षा उद्देशयोस्सह ।
रत्नस्पर्शनभुक्त्या च जातस्सांनिध्यानान्तयोः ॥
भूमिप्ररोहघाताभ्यामुत्सृज्यान्त च सूत्रगतं (?) ।
प्रवृषे (प्रावृष्ये ?) कत्र वसनं पोषधस्सप्रवारणाः ॥

इत्याद्यस्यान्तभाग लिङ्ग याञ्चा भाण्डोपभुग्द्रव कामोपभोग संवासानादराशोधकवस्तुकम् ।

स्पर्शपञ्जरनिक्षेपौ प्रतिछा(च्छा)दो निवारणम् ।
त्रयं किंचित्कचतुष्टयं गणसृतसीम्नि रक्षतः ॥
छन्दसंसृष्टसंस्पर्शाचतुष्टयं भवति पश्चिमम् ।
विधारणं सप्तकं द्वे चान्ये धारणाधिष्ठानोद्धारानुद्धार इति ॥

हिरण्यान्यचीवरासनवर्षकजनसंघार्थं वचनपत्रसंचतः निष्प्रयोजने हित्वानुस्मृतो नानुशाटी च द्वादशपर्ण्यं (?) नलपट्टकं चीवरं संक्षेपस्यान्वनत्व्यभिशोकभण्डनम् ।

अन्वयाशिक्षणानुस्था (?) नात् ।

जत्वङ्गुलितलरोमछ(च्छ)न्नौ च कर्णकग्रहणे भिक्षोश्च विघापाठनमोचन संतत्र(?)धारणं ।

गृहे छन्ने लयने मञ्चे उद्वर्त्तनमंचक उन्मुरोटिका गन्धपिण्याकतः ।

स्नानोशीरफलकुर्चत्रिशीर्पाणं कार्णड्कारवृद्धादि ।

छत्रोपानह आसन्दी निषादारिकर्त्तनं । घोडा विकयगृहपतिच्युत्वा लसुन रजादक धावन दानपरिवर्त्तनतः । वर्णकुलानिष्कासनन्तरुद्दिष्ट स(?श)पथ क्षयनायखण्डनक्रोशनसेकाभ्युपशयनतः ।

छन्दाववादपोषधवर्षप्रावरणकठिनोद्धारभाजनवर्षोका[ल ?]चर्मोचरणवादः ।

पृच्छा बहिश्छोरणे तिरः ।
॥ भिक्षुणीविभङ्गोद्दानम् ॥
ज्ञपनं सेकवाक्यञ्च सत्यवाक्यञ्च तद्यथा ।
रोहन्तः प्रस्त्रयोरर्थपोषधस्यात्र सा यदि ॥
संघे वैमतिके चास्यां (?) विवादनिष्ठितत्वयोः (।)
प्रवारणगते चात्र सर्वसिन्नर्धपञ्चके ॥
वर्षोपगमने चैव मृतार्थे प्रतिवस्तुना ।
दाने कठिनवस्त्रस्य दुष्कुलारोचने पि च ॥
दाने वस्त्रस्य गणन् (ने ?) चतुष्के कुलसम्मृति ।
तत्प्रस्तब्ध्यो( ? ) कुब्जे च सोन्मज्जे ज्ञप्तिमात्रकं ॥
मुखसीमद्वयाविप्रवासोन्मत्तप्रवारक ( ? ) ।
शय्यासनगृहगाणां कल्पभूमेश्च सन्मति ॥
कठिनस्य तदास्तर्तुरुद्धारो स्यावसारणं ।
विहारो देशिकादीनां स्थलस्यव्यूढनायकं ॥
शलाकम्चारकानां विहारकुटिदेशने ।
चोदकस्याप्रवासाय सन्मेतप्या ( सम्वेतस्या ? ) च चारिणः ॥
अप्रसादप्रवेदायपदित्रोर्वनवेदिनः ।
अवन्दनानलार्थं च दण्डशिक्षार्थमेव च ॥
एकलाभमित्यायाञ्च शिक्षणा न समुपस्थिते ।
पुत्रे ज्ञातौ बहिर्याने ज्ञपनं शैक्ष्यावासनं ॥
उपसंपादनं तीर्थ्यैयासदानं [च] मोचनं ।
सीम्नः साम्र(?म)प्र दानं च पोषधस्य च सप्तकं ॥
पट्कं च स्मृत्यसंमूढ तत्स्वभावगमष्टकं ।
आज्ञप्तध्वस्तदानं च ज्ञपनं सन्धिवाचनं ॥

॥ विनयकर्मसंग्रहकारिकाः समाप्ताः ॥

॥ समाप्तं विनयसूत्रम् । कृतिराचार्यगुणप्रभस्य ॥

॥ अनेन पुण्येन सर्वेषां लोकपिटकभाजनम् ॥

शाक्यभिक्षु धर्मकीर्त्तिना सत्त्वार्थे लिखितं श्रीमद्विक्रमशिलामाश्रित्य फाल्गुणमासे ॥

ग्नुर्-छोस्-क्यि-ग्रग्स्-पस्-ब्रिस्-प । द्पल्-ल्दन्-ऽ-ब्रि-क्रम-शि-लर्-द्प्येऽस्ल र-च-ल (=ग्नुर्-धर्मकीर्त्तिना श्रीमद्विक्रमशिलायां फाल्गुणे मासे)

प्रथम मुखपत्रे–

शी-ल-अ-क-र-स-ब्रिस-प ( = शीलाकरेण लिखितम् )

विग्रहव्यावर्त्तनी पुस्तकान्ते–

ग्नुर्-ध-र्म-किर्-तिस-ब्रिस-प-जो-च-म्यिङ्-मखन ब्रुयिन् ।

एतस्य धर्मकीर्त्तेर्वर्णनं देन्लेर-स्नो-पो ग्रन्थे ।

* * *